संस्कृत-भाषा-प्रचार-वाङ्मयमाला

# बालामृत—शतश्लोकी

[ संस्कृत-भवितव्यतः ]

श्रीमतां
फुलकुमारजी
पोतदारमहोदयानां
दानानुग्रहफलम्
इदम् ।



★

संकलयिता—स. ना. कुलकर्णी

( तृतीय-संस्करणम् )

प्रथम-पुष्पम् ]  १९५५  [ मूल्यम् आणक-द्वयम्

# हृद्गतम् ।

साम्प्रतिके अस्माकं शिक्षाप्रबन्धे विद्यते धर्मशिक्षणस्य आत्यंतिकः अभावः, पु- परधर्मीय-शासनात् अधुना तु धर्मातीत-शासनस्य अस्तित्वात् । एवं धर्मशिक्षणस्य भवि- अक्षम्या उपेक्षा । अस्याः हानेः निराकरणं समाजेन अवश्यं करणीयम् । नो चे- समाजस्य तथा च समग्रस्य राष्ट्रस्य अधःपातः सुनिश्चितः । इदं स्वानुभवेन वयं स- जानीमः खलु । अद्य सर्वत्र शासने व्यापारे परस्परसम्बन्धे वा लञ्चा, कृष्णविपणि बलात्कारः, परस्वापहारः, इत्यादि-समाज--विघातकवृत्तयः दरीदृश्यन्ते । धर्मस- अधिष्ठानाभावात् एव एतासाम् अधार्मिकवृत्तीनाम् अनिर्बन्ध-ताण्डवं विजृ- अस्मत्समाजे । समाजधौरेयैः तत् अवश्यं समुत्पाटनीयम् । नीति-विषयक-संस्कृ- श्लोक-स्तोत्रपठनेन जागृता भवेत् सा सुप्ता धर्मभावना यया न केवलं समाज- राष्ट्रम् अपि समुन्नतिं व्रजेत् ।

बालानां चतुर्थवर्षात् आरभ्य त्रयोदशवर्षं यावत् विद्यते कंठस्थीकरण-वयः अस्मिन् आयुरंशे यत् यत् कण्ठगतं भवेत् तत् तत् आमरणं न विस्मर्यते । अ- स्मृतिक्षमः कालः आधुनिक-शिक्षण-पद्धतौ विफलतां याति । पाश्चिमात्य-शिक्षण-शास्त्रज्ञा- अर्थ-ज्ञानं विना पाठने कालापव्ययं मन्यन्ते । न तथा अस्माकं पूर्वपरम्परागतं मतम् स्मृति-शक्तिः प्रथमं जागृता भवति, बुद्धि-शक्तिः तु अनन्तरम् । बुद्धिशक्तेः विकास- वयसः चतुर्दशवर्षे भवति । यत् बुध्द्या न आकल्यते तत् न पाठनीयम् इति पाश्चिमात्य- शिक्षण-शास्त्रज्ञानां मतम् । अस्मन्मते तु यत् स्मृत्या आकल्यते तत् स्मृतिगतं भवतु बुद्धेः विकासः तु यथावसरं भवेत् एव । बुद्धेः विकासम् अपेक्षमाणः स्मृतेः विकासः स्थगितः मा भवतु, स्मृति-विकास-क्षम-वयसि प्राप्ते एव स्मृतिशक्त्यै अन्नं देयम् अनन्तरं बुद्धिविकासे जाते अर्थः स्वयं स्मृतिगतासु सूक्तिषु प्रकाशं जनयेत् । अनया एव पद्धत्या पञ्चदश-षोडश-वर्षे पण्डिताः सञ्जाताः दृश्यन्ते पूर्वस्मिन् काले । न ते इन्द्रजाल-प्रभावेण झटिति अपण्डितेभ्यः पण्डितेषु परिवर्तिताः । परं तु स्मृति- संस्कारक्षमे वयसि यत् तैः कण्ठस्थीकृतम् तदेव बुद्धिविकास-शालिनि वयसि सु- फलितम् यथा वर्षासु उप्तं शीतकाले सुफलितं भवति । बाल्ये एव श्लोकपठनात् शुद्धोच्चारण-विषयकः वाणि-संस्कारः अपि भवेत् अलभ्यः लाभः । छात्रस्य मातृ- भाषाकोषः समृद्धतरः भवेत् । सुभाषितेषु संगृहीतः पितृपैतामहिकः परम्परागतः अनुभवः आत्मसात् भवेत् । अनेन जीवनस्य यतनस्खलनावधिः न्यूनतमतया कल्पितः भवेत् । जीवन-पथ-दर्शकानि अनुकरणार्ह-तत्त्वानि पुरःस्थापितानि भवेयुः । सामान्यतः जीवनस्य सम्यक् नियन्त्रणाय आवश्यकानां सदाचारतत्वानां पाथेयग्रन्थिः च छात्रस्य हस्ते निवेशितः भवेत् । एवम् एते कण्ठस्थीकरण-पाठाः जीवनसाध्यस्य अवाप्तेः साधनानि केवलम् । साध्यं खलु समाजदृष्टया सर्वक्षमस्य नागरिकस्य निर्मितिः एव ।

एतत्सर्वम् अवधार्य एव संस्कृत-भाषा-प्रचारिणी सभा अल्पवयस्कानां बालानां कृते इमां बालामृतशतलोकीं प्रकाशयति । आशास्यते च यत् एतेन न केवलं बालानां स्मृत्युत्तेजनरूपः अुच्चारणशुद्धिरूपः च महान् उपकारः स्यात् अपि तु समाज-चारित्र्य-शुद्धि-रूपम् अपि फलं लब्धं स्यात् ।

| | |
|---|---|
| धर्मपीठम्, नागपुरम् १<br>गुरुपूर्णिमा शके १८७४<br>दिनाङ्कः ७-७-५२ | स. ना. कुलकर्णी<br>प्रमुख-कार्यवाहः<br>संस्कृत-भाषा-प्रचारिणी सभा |

# शारदा-स्तवनम्

मंगलमय-वाग्देवीं वन्दे । कृपा यदीया चिर-शान्तिकृते ।। धृव० ।।
मयूर-पृष्ठं समधिवसन्ती । शुभ्र-माल्य-गुण-भूषित-मूर्तिः ।
वीणा-मण्डित-कर-दण्डा सती । जाड्यमशेषं नः संहरते ।
मंगलमय-।। १ ।।

श्रुति-स्मृतीनां सपुराणानाम् । सच्छास्त्रैः सह सकल-कलानाम् ।
रसधात्री या भक्त-जनानाम् । बोधमाशु याऽस्माकं कुरुते ।।
मंगलमय-।। २ ।।



# नीतिः

१. अयं निजः परो वेति गणना लघु-चेतसाम् । अनुष्टुभ्
उदार-चरितानां तु वसुधैव कुटुम्बकम् ।।

२. मातृवत् पर-दारेषु पर-द्रव्येषु लोष्ठवत् । ,,
आत्मवत् सर्व-भूतेषु यः पश्यति स पण्डितः ।।

३. गुणवज्जन-संसर्गाद् याति नीचोऽपि गौरवम् । ,,
पुष्प-माला-प्रसंगेन सूत्रं शिरसि धार्यते ।।

४. शतेषु जायते शूरः सहस्रेषु च पण्डितः । ,,
वक्ता दश-सहस्रेषु दाता भवति वा न वा ।।

५. अतिपरिचयादवज्ञा संतत-गमनादनादरो भवति । गीतिः
मलये भिल्ल-पुरंध्री चन्दन-तरु-काष्ठमिन्धनं कुरुते ।।

६. नाभिषेको न संस्कारः सिंहस्य क्रियते मृगैः । अनुष्टुभ्
विक्रमार्जित-राज्यस्य स्वयमेव मृगेन्द्रता ।।

७. श्रोत्रं श्रुतेनैव न कुण्डलेन दानेन पाणिर्न तु कंकणेन । उपजातिः
विभाति कायः खलु सज्जनानां परोपकारेण न चन्दनेन ।।

# चमत्कृतिः

१. कमले कमला शेते हरः शेते हिमालये । अनुष्टुभ्
क्षीराब्धौ च हरिः शेते मन्ये मत्कुण-शङ्कया ॥

२. असारे खलु संसारे सारं श्वशुर-मन्दिरम् । अनुष्टुभ्
हरो हिमालये शेते हरिः शेते महोदधौ ॥

३. किं वावसा तत्र विचारणीयं वासः प्रधानं खलु योग्यतायाः ।
पीताम्बरं वीक्ष्य ददौ स्वकन्यां चर्माम्बरं वीक्ष्य विषं समुद्रः ॥
—इन्द्रवज्रा

४. बिडौजाः पुरा पृष्टवान्पद्म-योनिं धरित्री-तले सार-भूतं किमस्ति ।
चतुर्भिर्मुखैरित्यवोचद्विरिंचिस्तमाखुस्तमाखुस्तमाखुस्तमाखुः ॥
—भुजंगप्रयातम्

५. लक्ष्मि क्षमस्व वचनीयमिदं दुरुक्तम् वसन्त-तिलका
अन्धीभवन्ति पुरुषास्त्वदुपासनेन ।
नोचेत्कथं कमल-पत्र-विशाल-नेत्रो
नारायणः स्वपिति पन्नग-भोग-तल्पे ॥

६. विष्णोश्चागमनं निशम्य सहसा कृत्वा फणीन्द्र गुणं शार्दूल-
कौपीनं परिधाय चर्म करिणः शम्भुः पुरो धावति । विक्रीडितम्
दृष्ट्वा विष्णु-रथं सकम्प-हृदयः सर्पोऽपतद् भू-तल
कृत्तिर्विस्खलिता ह्रियानत-मुखो नग्नो हरः पातु वः ॥

७. हे हेरम्ब किमम्ब रोदिषि कथं कर्णौ लुठत्यग्निभूः ,,
किं ते स्कन्द विचेष्टितं मम पुरा संख्या कृता चक्षुषाम्
नैतत्तेऽप्युचितं गजास्य चरितं नासां मिमीतेऽम्ब मे
तावेवं सहसा विलोक्य हसित-व्यग्रा शिवा पातु वः ॥

# नीतिः

१. सत्यं ब्रूयात्प्रियं ब्रूयान्न ब्रूयात्सत्यमप्रियम् ।        अनुष्टुभ्
प्रियं च नानृतं ब्रूयादेष धर्मः सनातनः ॥

२. अपमानं पुरस्कृत्य मान कृत्वा च पृष्ठतः ।        ,,
स्वकार्यमुद्धरेत्प्राज्ञः कार्य-ध्वंसो हि मूर्खता ॥

३. परोक्षे कार्य-हन्तारं, प्रत्यक्षे प्रिय-वादिनम् ।        ,,
वर्जयेत्तादृशं मित्रं, विष-कुम्भ पयो-मुखम् ॥

४. यद्यदात्मनि चेच्छेत तत्परस्यापि चिंतयेत् ।        ,,
आत्मनः प्रतिकूलानि परेषां न समाचरेत् ॥

५. अर्थ-नाशं मनस्तापं गृहे दुश्चरितानि च ।        ,,
वञ्चनं चापमानं च मतिमान्न प्रकाशयेत् ॥

६. त्रि-विधं नरकस्येद द्वारं नाशनमात्मनः ।        ,,
कामः क्रोधस्तथा लोभस्तस्मादेतत् त्रयं त्यजेत् ॥

७. आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ।        ,,
नास्त्युद्यम-समो बन्धुः कृत्वा यं नावसीदति ॥

८. वरमसि-धारा तरु-तल-वासः, वरमिह भिक्षा वरमुपवासः ।
वरमपि घोरे नरके पतनं, न च धन-गर्वित-बान्धव-शरणम् ॥

९. किं नु मे स्यादिदं कृत्वा किं नु मे स्यादकुर्वतः ।        अनुष्टुभ्
इति सचिन्त्य मनसा प्राज्ञः कुर्वीत वा न वा ॥

१०. पित्रोर्नित्यं हितं कुर्यादाचार्यस्य च सर्वदा ।        ,,
तेषु हि त्रिषु तुष्टेषु तपः सर्वं समाप्यते ॥

# अर्थान्तरन्यासः

१. अतिदानाद् बलिर्बद्धो ह्यतिमानात्सुयोधनः । अनुष्टुभ्
विनष्टो रावणो लौल्यात् अति सर्वत्र वर्जयेत् ॥

२. प्रिय- वाक्य–प्रदानेन सर्वे तुष्यन्ति जन्तवः । ,,
तस्मात्तदेव वक्तव्यं वचने किं दरिद्रता ॥

३. अश्वं नैव गजं नैव व्याघ्रं नैव च नैव च । ,,
अजा-पुत्रं बलिं दद्यात् देवो दुर्बल-घातकः ॥

४. चक्षुःपूतं न्यसेत्पादं वस्त्र-पूतं पिबेज्जलम् । ,,
सत्य-पूतां वदेद् वाणीं मनःपूतं समाचरेत् ॥

५. उदारस्य तृणं वित्तं शूरस्य मरणं तृणम् । ,,
विरक्तस्य तृणं भार्या निःस्पृहस्य तृणं जगत् ॥

६. अमन्त्रमक्षरं नास्ति नास्ति मूलमनौषधम् । ,,
अयोग्यः पुरुषो नास्ति योजकस्तत्र दुर्लभः ॥

७. सत्यानुसारिणी लक्ष्मीः कीर्तिस्त्यागानुसारिणी । ,,
अभ्याससारिणी विद्या बुद्धिः कर्मानुसारिणी ॥

८. मर्कटस्य सुरा-पानं तस्य वृश्चिक-दंशनम् । ,,
तन्मध्ये भूत-संचारो यद्वा तद्वा भविष्यति ॥

९. श्रुतिर्विभिन्ना श्रुतयश्च भिन्ना नैको मुनिर्यस्य वचः प्रमाणम् ।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः ॥
उपेन्द्रवज्रा

१०. क्षते प्रहारा निपतन्त्यभीक्ष्णं धन-क्षये दीप्यति जाठराग्निः ।
आपत्सु वैराणि समुद्भवन्ति छिद्रेष्वनर्था बहुलीभवन्ति ॥
उपजातिः

# अन्योक्तिः

१. अयं रत्नाकरोऽम्भोधिरित्यसेवि धनाशया।
धनं दूरेऽस्तु वदनमपूरि क्षारवारिभिः॥ अनुष्टुभ्

२. मुञ्च मुञ्च सलिलं दया-निधे नास्ति नास्ति समयो विलम्बने।
अद्य चातक-कुले मृते पुनर्वारि वारि-धर किं करिष्यसि॥
--रथोद्धता

३. तावत्कोकिल विरसान्यापय दिवसान्वनान्तरे निवसन्।
यावन्मिलदलि-मालः कोऽपि रसालः समुल्लसति॥ आर्या

४. आदाय वारि परितः सरितां मुखेभ्यः
किं तावदर्जितमनेन दुरर्णवेन।
क्षारीकृतं च वडवा-दहने हुत च
पाताल-कुक्षि-कुहरे विनिवेशितं च॥ वसन्ततिलका

५. यदम्बु-कणमादाय प्राप्तोऽसि जलदोन्नतिम्।
तस्योपर्यम्बुधेर्गर्जा मलिनस्योचितैव ते॥ अनुष्टुभ्

६. जल-धर जल-भर-निकरैरपहर परितापमुद्धतं जगतः।
नोचेदपसर दूरं हिमकर-कर–दर्शनं वितर॥ आर्या

७. अहह चण्ड-समीरण दारुणं किमिदमाचरितं चरितं त्वया।
यदिह चातक-चञ्चु-पुटोदरे पतति वारि तदेव निवारितम्॥
--विलम्बितम्

८. रे रे चातक सावधान-मनसा मित्र क्षणं श्रूयताम्
अम्भोदा बहवो वसन्ति गगने सर्वेऽपि नैतादृशाः।
केचिद् वृष्टिभिरार्द्रयन्ति धरणीं गर्जन्ति केचिद् वृथा
यं यं पश्यसि तस्य तस्य पुरतो मा ब्रूहि दीनं वचः॥
शार्दूल०

# अर्थान्तरन्यासः

१. पिबन्ति नद्यः स्वयमेव नाम्भः स्वयं न खादन्ति फलानि वृक्षाः ।
नादन्ति सस्यं खलु वारि-वाहाः परोपकाराय सतां विभूतयः ॥
—उपजातिः

२. यस्यास्ति वित्तं स नरः कुलीनः स पण्डितः स श्रुतवान् गुणज्ञः ।
स एव वक्ता स च दर्शनीयः सर्वे गुणाः काञ्चनमाश्रयन्ते ॥
—उपजातिः

३. आत्मनो मुख-दोषेण बध्यन्ते शुक-सारिकाः ।
बकास्तत्र न बध्यन्ते मौनं सर्वार्थ-साधनम् ॥ अनुष्टुभ्

४. न भूत-पूर्वो न च केन दृष्टो हेम्नः कुरंगो न कदापि वार्ता ।
तथापि तृष्णा रघु-नन्दनस्य विनाश-काले विपरीत-बुद्धिः ।
—उपजातिः

५. राज्ञि धर्मिणि धर्मिष्ठाः पापे पापाः समे समाः ।
लोकास्तमनुवर्तन्ते यथा राजा तथा प्रजा ॥ अनुष्टुभ्

६, सर्पाः पिबन्ति पवनं न च दुर्बलास्ते
शुष्कैस्तृणैर्वन-गजा बलिनो भवन्ति ।
कन्दैः फलैर्मुनिवराः क्षपयन्ति कालं
सन्तोष एव पुरुषस्य परं निधानम् ॥ वसन्ततिलका

७. पिता रत्नाकरो यस्य लक्ष्मीर्यस्य सहोदरी ।
शङ्खो रोदिति भिक्षार्थी फलं भाग्यानुसारतः ॥ अनुष्टुभ्

८. स्वयं महेशः श्वशुरो नगेशः सखा धनेशस्तनयो गणेशः ।
तथापि भिक्षाटनमेव शम्भोर्बलीयसी केवलमीश्वरेच्छा ॥
—उपेन्द्रवज्रा

९. रत्नैर्महार्हैस्तुतुषुर्न देवा न भेजिरे भीम-विषेण भीतिम् ।
सुधां विना न प्रययुर्विरामं न निश्चितार्थाद्विरमन्ति धीराः ॥
—उपजातिः

# नीतिः

१. नारिकेल-समाकारा दृश्यन्तेऽपि हि सज्जनाः ।
अन्ये बदरिकाकारा बहिरेव मनोहराः ॥ अनुष्टुभ्

२. सज्जनस्य हृदयं नवनीतं यद्वदन्ति कवयस्तदलीकम् ।
अन्य-देह-विलसत्परितापात् सज्जनो द्रवति नो नवनीतम् ॥
स्वागता

३. निन्दन्तु नीति-निपुणा यदि वा स्तुवन्तु
लक्ष्मीः समाविशतु गच्छतु वा यथेष्टम् ।
अद्यैव वा मरणमस्तु युगान्तरे वा
न्याय्यात्पथः प्रविचलन्ति पदं न धीराः ॥ वसन्त-तिलका

४. उद्योगिनं पुरुष-सिंहमुपैति लक्ष्मीः
दैवेन देयमिति कापुरुषा वदन्ति ।
दैवं निहत्य कुरु पौरुषमात्म-शक्त्या
यत्ने कृते यदि न सिध्यति कोऽत्र दोषः ॥ वसन्त-तिलका

५. उदयति यदि भानुः पश्चिमे दिग्विभागे
प्रचलति यदि मेरुः शीततां याति वह्निः ।
विकसति यदि पद्मं पर्वताग्रे शिलायां
न भवति पुनरुक्तं भाषितं सज्जनानाम् ॥ मालिनी

६. आरभ्यते न खलु विघ्न-भयेन नीचैः
प्रारभ्य विघ्न-विहता विरमन्ति मध्याः ।
विघ्नैः पुनः पुनरपि प्रतिहन्यमानाः
प्रारभ्य चोत्तम-जना न परित्यजन्ति ॥ वसन्त-तिलका

# चमत्कृतिः

१. गुणिनं जनमालोक्य निज-बन्धन-शङ्कया ।
राजँल्लक्ष्मीः कुरङ्गीव दूरं दूरं पलायते ॥ अनुष्टुभ्

२. शूरं त्यजामि वैधव्यादुदारं लज्जया पुनः ।
सापत्न्यात्पण्डितमपि तस्मात्कृपणमाश्रये ॥ अनुष्टुभ्

३. पीतोऽगस्त्येन तातश्चरण-तल-हता वल्लभोऽन्येन रोषात्
आबाल्याद्विप्र- वर्यैः स्व-वदन-विवरे धारिता वैरिणी मे ।
गेहं मे छेदयन्ति प्रतिदिवसमुमा-कान्त-पूजा-निमित्तं
तस्मात्खिन्ना सदाऽहं द्विज-कुल-सदनं नाथ नित्यं त्यजामि ॥
—स्रग्धरा

४. लक्ष्मीवन्तो न जानन्ति प्रायेण पर-वेदनाम् ।
शेषे धरा-भर-क्लान्ते शेते नारायणः सुखम् ॥ अनुष्टुभ्

५. आशा नाम मनुष्याणां काचिदाश्चय-शृंखला ।
यया बद्धाः प्रधावन्ति मुक्तास्तिष्ठन्ति पंगुवत् ॥ अनुष्टुभ्

६. वैद्य-राज नमस्तुभ्यं यम-राज-सहोदर ।
यमस्तु हरति प्राणान्वैद्यः प्राणान्धनानि च ॥ अनुष्टुभ्

७. वृक्षाग्रवासी न च पक्षि-राजस्त्रिनेत्र-धारी न च शूल-पाणिः ।
त्वग्वस्त्र-धारी न च सिद्ध-योगी जलं च बिभ्रन्न घटो न मेघः ॥
—उपजातिः

८. अपदो दूर-गामी च साक्षरो न च पण्डितः ।
अमुखः स्फुट-वक्ता च यो जानाति स पण्डितः ॥ अनुष्टुभ्

९. न विद्यया नैव कुलेन गौरवं, जनानुरागो धनिकेषु सर्वदा ।
कपालिना मौलि-धृतापि जाह्नवी प्रयाति रत्नाकरमेव सत्वरम् ॥
—वंशस्थम्

# चमत्कृतिः

१. दारिद्र्य शोचामि भवन्तमेवमस्मच्छरीरे सुहृदित्युषित्वा ।
विपन्न-देहे मयि मन्द-भाग्ये ममेति चिन्ता क्व गमिष्यसि त्वम् ॥
--उपजातिः

२. परीक्ष्य सत्कुलं विद्यां शीलं शौर्यं सुरूपताम् । अनुष्टुभ्
विधिर्ददाति निपुणः कन्यामिव दरिद्रताम् ॥

३. हे दारिद्र्य नमस्तुभ्यं सिद्धोऽहं त्वत्प्रसादतः । „
पश्याम्यहं जगत्सर्वं न मां पश्यति कश्चन ॥

४. दूये कान्ता-करं वीक्ष्य मणि-कंकण-वर्जितम् । „
अतः परं परं दूये मणिकं कण-वर्जितम् ॥

५. दारिद्र्य भोस्त्वं परमं विवेकि गुणाधिके पुंसि सदानुरक्तम् ।
विद्या-विहीने गुण-वर्जिते च मुहूर्त-मात्रं न रतिं करोषि ॥
--उपजातिः

६. उत्तिष्ठ क्षणमेकमुद्वह सखे दारिद्र्य-भारं मम शार्दूल०
श्रान्तस्तावदहं चिरान्मरणजं सेवे त्वदीयं सुखम् ।
इत्युक्तं धन-वर्जितस्य वचनं श्रुत्वा स्मशाने शवो
दारिद्र्यान्मरणं वरं वरमिति ज्ञात्वैव तूष्णीं स्थितः ॥

७. दग्धं खाण्डवमर्जुनेन बलिना दिव्यैर्द्रुमैः सेवितं „
दग्धा वायु-सुतेन रावणपुरी लङ्का पुनः स्वर्णभूः ।
दग्धः पञ्च-शरः पिनाक-पतिना तेनाप्ययुक्तं कृतं
दारिद्र्यं जन-तापकारकमिदं केनापि दग्धं न हि ॥

८. तृणादपि लघुस्तूलस्तूलादपि च याचकः । अनुष्टुभ्
वायुना किं न नीतोऽसौ मामय प्रार्थयेदिति ॥

# अन्योक्तिः

१. रे रे रासभ वस्त्र-भार-वहनात्कुग्रासमश्नासि किं शार्दूल०
राजाश्वावसथं प्रयाहि चणकाभ्यूषान्सुखं भक्षय ।
सर्वान्पुच्छवतो हयानिति वदन्त्यत्राधिकारे स्थिताः
राजा तैरुपदिष्टमेव मनुते सत्यं तटस्थाः परे ॥

२. काकस्य गात्रं यदि काञ्चनस्य माणिक्य-रत्नं यदि चञ्चु-देशे ।
एकैक-पक्षे ग्रथितं मणीनां तथापि काको न तु राज-हंसः ॥
--उपजातिः

३. पीतं यत्र हिमं पयः कवलिता यस्मिन्मृणालाङ्कुरा- शार्दूल०
स्तापार्तेन निमज्ज्य यत्र सरसो मध्ये विमुक्तः श्रमः ।
धिक्तस्यैव जलानि पङ्किलयतः पाथोजिनीं मथ्नतो
मूलान्युत्खनतः करीन्द्र भवतो लज्जापि नो जायते ॥

४. जहीहि गुरु गर्वितं विजहि शुण्डया सीत्कृतं पृथ्वी
परिभ्रम शनैर्वन किमु गजेन्द्र गर्वायसे ।
यथा न किल केसरी गिरि-दरीषु निद्रां त्यजन्
विमूर्च्छयति जृम्भया सुभग तावकीनं मनः ॥

५. रात्रिर्गमिष्यति भविष्यति सुप्रभातं वसन्ततिलका
भास्वानुदेष्यति हसिष्यति पङ्कज-श्रीः ।
इत्थं विचिन्तयति कोष-गते द्वि-रेफे
हा हन्त हन्त नलिनीं गज उज्जहार ॥

६. अपसर मधु-कर दूरं परिमल-बहुलेऽपि केतकी-कुसुमे । गीतिः
इह न हि मधु-लव-लाभो भवति परं धूलि-धूसरं वदनम् ॥

# नीतिः

१. उद्यमः साहसं धैर्यं बुद्धिः शक्तिः पराक्रमः । अनुष्टुभ्
षडेते यत्र वर्तन्ते तत्र देवः सहाय-कृत् ॥

२. आयुषः क्षण एकोऽपि न लभ्यः स्वर्ण-कोटिभिः । ,,
स चेन्निरर्थकं नीतः का नु हानिस्ततोऽधिका ॥

३. यस्य नास्ति स्वयं प्रज्ञा शास्त्रं तस्य करोति किम् । ,,
लोचनाभ्यां विहीनस्य दर्पणः किं करिष्यति ॥

४. यो ध्रुवाणि परित्यज्य ह्यध्रुवं परिषेवते । ,,
ध्रुवाणि तस्य नश्यन्ति ह्यध्रुवं नष्टमेव हि ।

५. सम्पदि यस्य न हर्षो विपदि विषादो रणे न भीरुत्वम् । आर्या
तं भुवन-त्रय-तिलकं जनयति जननी सुतं विरलम् ॥

६. यान्ति न्याय-प्रवृत्तस्य तिर्यञ्चोऽपि सहायताम् । अनुष्टुभ्
अपन्थानं तु गच्छन्तं सोदरोऽपि विमुञ्चति ॥

७. सकृज्जल्पन्ति राजानः सकृज्जल्पन्ति पण्डिताः । ,,
सकृत् कन्याः प्रदीयन्ते त्रीण्येतानि सकृत् सकृत् ॥

८. उत्तमा आत्मनः ख्याताः पितुः ख्याताश्च मध्यमाः । ,,
अधमा मातुलात्ख्याताः श्वशुराच्चाधमाधमाः ॥

९. देहीति वचनं श्रुत्वा देहस्थाः पञ्च-देवताः । ,,
मुखान्निर्गत्य गच्छन्ति श्री-ह्री-धी-धृति-कीर्तयः ॥

१०. दरिद्रता धीरतया विराजते कुरूपता शीलतया विराजते ।
कुभोजनं चोष्णतया विराजते कुवस्त्रता स्वच्छतया विराजते ॥
--वंशस्थम्

# कृशरा

१. शरदि न वर्षति गर्जति वर्षति वर्षासु निःस्वनो मेघः । आर्या
नीचो वदति न कुरुते न वदति सुजनः करोत्येव ॥
२. क्षारं जलं वारि-मुचः पिबन्ति तदेव कृत्वा मधुरं वमन्ति ।
सन्तस्तथा दुर्जन-दुर्वचांसि पीत्वा च सूक्तानि समुद्गिरन्ति ॥
३ उदये सविता रक्तो रक्तश्चास्तमने तथा । अनुष्टुभ्
सम्पत्तौ च विपत्तौ च महतामेकरूपता ॥
४. असम्भवं हेम-मृगस्य जन्म तथापि रामो लुलुभे मृगाय ।
प्रायः समापन्न-विपत्ति-काले धियोऽपि पुंसां मलिनीभवन्ति ॥
--उपजातिः
५. खद्योतो द्योतते तावद् यावन्नोदयते शशी । अनुष्टुभ्
उदिते तु सहस्रांशौ न खद्योतो न चन्द्रमाः ॥
६. वातोल्लसित-कल्लोल धिक् ते सागर गर्जितम् । ,,
यस्य तीरे तृषाक्रान्तः पान्थः पृच्छति वापिकाम् ॥
७. कोलाहले काक-कुलस्य जाते विराजते कोकिल-कूजितं किम् ।
परस्परं संवदतां खलानां मौनं विधेयं सततं सुधीभिः ॥
उपजातिः
८. पाटीर तव पटीयान् कः परिपाटीमिमामुरीकर्तुम् । गीतिः
यत्पिषतामपि नृणां पिष्टोऽपि तनोषि परिमलैस्तुष्टिम् ॥
९. उपदेशो हि मूर्खाणां प्रकोपाय न शान्तये । अनुष्टुभ्
पयःपानं भुजंगानां केवलं विष-वर्धनम् ॥
१०. तृष्णां छिन्धि भज क्षमां जहि मदं पापे रतिं मा कृथाः शार्दूल.
सत्यं ब्रूह्यनुयाहि साधु-पदवीं सेवस्व विद्वज्जनान् ।
मान्यान्मानय विद्विषोऽप्यनुनय प्रच्छादय स्वान्गुणान्
कीर्तिं पालय दुःखिते कुरु दयामेतत्सतां लक्षणम् ॥

# स्तोत्रमाधुरी

१. गाङ्गं वारि मनो-हारि मुरारि-चरण-च्युतम् ।                    अनुष्टुभ्
त्रिपुरारि-शिरश्चारि पाप-हारि पुनातु माम् ॥

२. पापापहारि दुरितारि तरङ्ग-धारि शैल-प्रचारि गिरि-राज गुहा-विदारि ।
झङ्कारकारि हरि-पाद-रजोपहारि गाङ्गं पुनातु सततं शुभकारि वारि ॥

३. मुरारि-काय–कालिमा–ललाम–वारि–धारिणी                    पञ्चचामरम्
तृणीकृत-त्रिविष्टपा त्रिलोक–शोक–हारिणी ।
मनोऽनुकूल–कूल–कुञ्ज–पुञ्ज–धूत–दुर्मदा
धुनोतु मे मनोमल कलिन्द-नन्दिनी सदा ॥

४. भज गोविन्दं भज गोविन्दं भज गोविन्दं मूढ-मते ।   पञ्जरिका
प्राप्ते सनिहिते मरणे न हि न हि रक्षति डुकृञ्करणे ॥

५. अङ्ग गलितं पलितं मुण्डं दशन-विहीनं जातं तुण्डम् ।"
वृद्धो याति गृहीत्वा दण्ड तदपि न मुञ्चत्याशा-पिण्डम् । भज०॥

६. जगन्मातर्मातस्तव चरण-सेवा न रचिता                    शिखरिणी
न वा दत्त देवि द्रविणमपि भूयस्तव मया ।
तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥

७. अधरं मधुरं वदनं मधुरं नयनं मधुरं हसितं मधुरम् ।      तोटकम्
हृदयं मधुरं गमनं मधुरं मधुराधिपतेरखिलं मधुरम् ॥

८. अच्युतं केशवं राम-नारायणं कृष्ण-दामोदरं वासुदेवं हरिम् ।
श्रीधरं माधवं गोपिका-वल्लभं जानकी-नायकं राम-चन्द्रं भजे ॥
—स्रग्विणी

९. सर्वेऽपि सुखिनः सन्तु सर्वे सन्तु निरामयाः ।                    अनुष्टुभ्
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखमाप्नुयात् ॥

संस्कृत-भाषा-प्रचारि-सभायाः

# मौखिक-संस्कृत-परीक्षाः

संस्कृत-भाषाप्रचारि-सभायाः निम्नलिखित-मौखिक-परीक्षाः प्रतिवर्षं भविष्यन्ति। एताः सर्वाः परीक्षाः मौखिक्यः एव वर्तन्ते। परीक्षाः प्रतिवर्षं द्विवारं ख्रिस्ताब्दस्य प्रथमे मासि अष्टमे मासि च (एवं हेमन्ततौं वर्षतौं च) भविष्यन्ति। द्वयोःपरीक्षयोः मध्ये भवेत् षण्मासानाम् अन्तरम्। नागपुरस्थाः नागपुरात् बहिःस्थाः च परीक्षार्थिनःबालक-बालिकाःच परीक्षार्हाः भवेयुः। परीक्षा-शुल्कं प्रतिछात्रं चतुराणकं केवलम्। यदि दशसंख्याधिकाः परीक्षार्थिनः आवेदन-पत्रं सर्वकारमान्य-विद्यालयस्य मुख्याध्यापकद्वारा प्रेषयिष्यन्ति तर्हि परीक्षा-केन्द्रस्य आयोजनं मुख्याध्यापक-महाभागस्य सहकार्येण कर्तुं शक्यते। आवेदन-पत्राणि परीक्षाशुल्केन सह परीक्षा-मासस्य मासपूर्वं प्रेषणीयानि। आवेदन-पत्रे परीक्षार्थिनः नाम, पितुः नाम, कुल-नाम, वयः, पाठशालां, निवासस्थानं, केन्द्र-नाम च लिखन्तु। परीक्षोत्तीर्णच्छात्रेभ्यः प्रमाण-पत्राणि प्रदीयन्ते यथासमयम्। श्रेणिगुणानां प्रतिशतता अधोलिखिता भवेत्—

| | |
|---|---|
| प्रथम–श्रेणिः | ८०–१०० |
| द्वितीय–श्रेणिः | ६०–७९ |
| तृतीय–श्रेणिः | ४०–५९ |
| प्रावीण्यम् | ९०–१०० |

एतासां परीक्षाणां नामानि पाठ्यक्रमः पुस्तक-नामानि च अधः लिख्यन्ते। पाठ्य-क्रमान्तर्गतानां द्वादश-पाठ्य-पुस्तिकानां मूल्यम् आणक-द्वयं प्रत्येकम्।

**प्रथम–परीक्षा–**

१. बालामृत-शतश्लोकी
२. सुलभ-शब्द-रूपावलिः
३. व्यवहार-प्रश्नोत्तरी

**द्वितीय–परीक्षा–**

४. उपयुक्त-धातुरूपावलिः
५. हितोपदेश-कथाः
६. संक्षिप्तामरकोशः

प्रथम-परीक्षायाः पाठ्य-क्रमः च।

**तृतीय–परीक्षा–**

७. छात्रामृत-शतश्लोकी
८. रामायण-कथा
९. व्यवहार-सूक्तावलिः

द्वितीय-परीक्षायाः पाठ्य-क्रमः च।

**संस्कृत-प्रवेश–परीक्षा–**

१०. महाभारत-कथाः
११. नाट्य-प्रवेशः
१२. कौमुदी-प्रवेशः

तृतीय-परीक्षायाः पाठ्य-क्रमः च।

धर्मपीठम्, नागपुरम् १

स. ना. कुलकर्णी
सं. भा. प्र. सभायाः
प्रमुख-कार्यवाहः



इयं पुस्तिका वर्धानगरस्थ-राष्ट्रभाषा-प्रचार-समितेः मुद्रणालये मुद्रिता नागपुरस्थ-संस्कृतभाषाप्रचारि-सभाद्वारा प्रमुख-कार्यवाहेन धर्मपीठे कुलकर्णी-भवने प्रकाशतां च नीता।

संस्कृत-भाषा-प्रचार-वाङ्मयमाला

# सुलभ-शब्द-रूपावलिः

[ बालानां कृते ]

श्रीमतां
कृष्णराव-शंकरराव-
चिटणवीस-महोदयानां-
दानानुग्रहफलम्
इदम्

संकलयिता—स. ना. कुलकर्णी

( द्वितीयं संस्करणम् )



द्वितीयं पुष्पम् ] १९५४ [ मूल्यम् आणक-द्वयम्

# हृद्गतम् !

यस्मिन् भाषाशास्त्रे शब्दानां स्वरूपस्य, व्युत्पत्तेः, पारस्परिक-संम्बन्धस्य च विचारः क्रियते तच्छास्त्रं व्याकरणम् इति अभिधीयते । व्याकरण-शास्त्रज्ञाः वैयाकरणाः इति उच्यन्ते । वैयाकरणैः शब्दानां तावत् द्वौ विभागौ कृतौ व्ययशब्दाः अव्ययशब्दाः च इति । व्ययशब्दाः ते भवन्ति येषाम् मौलिकरूपम् सुप्-तिङाद्यनुरोधेन परिवर्तते । सुप्-प्रत्ययाः नाम–सर्वनाम–विशेषण–शब्दानां परतः भवन्ति । अव्यय-शब्दाः तु ते येषाम् रूपम् सर्वेषु लिङ्गेषु सर्वासु विभक्तिषु च समम् एव अविकृतम् तिष्ठति । सुप्-प्रत्ययान्ताः शब्दाः सुबन्ताः इति उच्यन्ते । सुबन्त-शब्दानां मौलिकं रूपम् प्रातिपदिकम् इति अभिधीयते । अस्मिन् पुस्तके प्रातिपदिकानाम् सुबन्तरूपाणि दीयन्ते । सुबन्त-शब्दानां भवन्ति लिङ्ग-विकाराः, वचन-विकाराः, विभक्ति-विकाराः च । संस्कृत-भाषायां पुंल्लिङ्गं, स्त्रीलिङ्गं, नपुंसकलिङ्गं च इति त्रीणि लिङ्गानि; एकवचनं, द्विवचनं, बहुवचनं च इति त्रीणि वचनानि; प्रथमा, द्वितीया, तृतीया, चतुर्थी पञ्चमी, षष्ठी, सप्तमी, सम्बोधनं च इति अष्ट विभक्तयः च भवन्ति । सुबन्त-रूपाणि प्रायः प्रातिपदिकानाम् अन्त्याक्षरानुसारेण विभिन्नानि भवन्ति । अस्मिन् पुस्तके केचन 'नायक'-शब्दाः दत्ताः एतेषाम् अन्त्याक्षरानुरूपं लिङ्गानुरूपं च येषां रूपं ते नामशब्दाः विशेषणशब्दाः च तादृशानि रूपाणि भजन्ते ।

बालानां चतुर्थवर्षात् आरभ्य त्रयोदशवर्षं यावत् विद्यते कंठस्थीकरण-वयः । अस्मिन् आयुरंशे यत् यत् कण्ठगतं भवेत् तत् तत् आमरणं न विस्मर्यते । अयं स्मृतिक्षमः कालः आधुनिक-शिक्षणपद्धतौ विफलतां याति । पाश्चात्य-शिक्षण-शास्त्रज्ञाः अर्थ-ज्ञानं विना पाठने कालापव्ययं मन्यन्ते । न तथा अस्माकं पूर्वपरम्परागतं मतम् । स्मृतिशक्तिः प्रथमं जागृता भवति, बुद्धिशक्तिः तु अनन्तरम् । बुद्धिशक्तेः विकासः वयसः चतुर्दशवर्षे भवति । यत् बुध्या न आकल्यते तत् न पाठनीयम् इति पाश्चात्य-शिक्षण-शास्त्रज्ञानां मतम् । अस्मन्मते तु यत् स्मृत्या आकल्यते तत् स्मृतिगतं भवतु, बुद्धेः विकासः तु यथावसरं भवेत् एव । बुद्धेः विकासम् अपेक्षमाणः स्मृतेः विकासः स्थगितः मा भवतु, स्मृतिविकास-क्षम-वयसि प्राप्ते एव स्मृतिशक्त्यै अन्नं देयम् । अनन्तरं बुद्धिविकासे जाते अर्थः स्वयं स्मृतिगतासु सूक्तिषु प्रकाशं जनयेत् । अनया एव पद्धत्या पञ्चदश-षोडश-वर्षे पण्डिताः सञ्जाताः दृश्यन्ते पूर्वस्मिन् काले । न ते इन्द्रजाल-प्रभावेण झटिति अपण्डितेभ्यः पण्डितेषु परिवर्तिताः, परं तु स्मृति-संस्कार-क्षम-वयसि यत् तैः कण्ठस्थीकृतम् तदेव बुद्धि-विकास-शालिनि वयसि सुफलितम् यथा वर्षासु उप्तं बीजं शीतकाले सुफलितं भवति ।

एतत्सर्वम् अवधार्य एव संस्कृत-भाषा-प्रचारिणी सभा अल्पवयस्कानां बालानां कृते इमां सुलभशब्दरूपवलिं प्रकाशयति । आशास्यते च यत् अस्याः कण्ठस्थी-करणेन बालानां स्मृत्युत्तेजनरूपः उच्चारणशुद्धिरूपः च महान् उपकारः स्यात् ।

धर्मपीठम्, नागपुरम् १
श्रावण-पूर्णिमा शके १८७४
दिनाङ्कः ५–८–५२

स. ना. कुलकर्णी
प्रमुख-कार्यवाहः
संस्कृत-भाषा-प्रचारिणी सभा

# श्रीगणेशाय नमः

रामो राजमणिः सदा विजयते रामं रमेशं भजे
रामेणाभिहता निशाचरचमू रामाय तस्मै नमः।
रामान्नास्ति परायणं परतरं रामस्य दासोऽस्म्यहं
रामे चित्तलयः सदा भवतु मे भो राम मामुद्धर ॥

## १. अकारान्तः पुंलिङ्गः राम-शब्दः ।

| एकवचनम् । | द्विवचनम् । | बहुवचनम् । | विभक्तिः । |
|---|---|---|---|
| रामः | रामौ | रामाः । | प्रथमा । |
| राम | रामौ | रामाः । | संबोधनम् । |
| रामम् | रामौ | रामान् । | द्वितीया । |
| रामेण | रामाभ्याम् | रामैः । | तृतीया । |
| रामाय | रामाभ्याम् | रामेभ्यः । | चतुर्थी । |
| रामात् | रामाभ्याम् | रामेभ्यः । | पञ्चमी । |
| रामस्य | रामयोः | रामाणाम् । | षष्ठी । |
| रामे | रामयोः | रामेषु । | सप्तमी । |

## २. आकारान्तः स्त्रीलिङ्गः रमा-शब्दः ।

| | | | |
|---|---|---|---|
| रमा | रमे | रमाः । | प्रथमा । |
| रमे | रमे | रमाः । | संबोधनम् । |
| रमाम् | रमे | रमाः । | द्वितीया । |
| रमया | रमाभ्याम् | रमाभिः । | तृतीया । |
| रमायै | रमाभ्याम् | रमाभ्यः । | चतुर्थी । |
| रमायाः | रमाभ्याम् | रमाभ्यः । | पञ्चमी । |
| रमायाः | रमयोः | रमाणाम् । | षष्ठी । |
| रमायाम् | रमयोः | रमासु । | सप्तमी । |

## ३. अकारान्तः नपुंसकलिंगः वन-शब्दः ।

| | | | |
|---|---|---|---|
| वनम् | वने | वनानि । | प्रथमा । |
| वन | वने | वनानि । | संबोधनम् । |
| वनम् | वने | वनानि । | द्वितीया । |
| वनेन | वनाभ्याम् | वनैः । | तृतीया । |

शेषरूपाणि राम-शब्दवत् ज्ञेयानि ।

## ४. इकारान्तः पुंलिंगः हरि-शब्दः ।

| | | | |
|---|---|---|---|
| हरिः | हरी | हरयः । | प्रथमा । |
| हरे | हरी | हरयः । | संबोधनम् । |
| हरिम् | हरी | हरीन् । | द्वितीया । |
| हरिणा | हरिभ्याम् | हरिभिः । | तृतीया । |
| हरये | हरिभ्याम् | हरिभ्यः । | चतुर्थी । |
| हरेः | हरिभ्याम् | हरिभ्यः । | पञ्चमी । |
| हरेः | हर्योः | हरीणाम् । | षष्ठी । |
| हरौ | हर्योः | हरिषु । | सप्तमी । |

## ५. उकारान्तः पुंलिंगः भानु-शब्दः ।

| | | | |
|---|---|---|---|
| भानुः | भानू | भानवः । | प्रथमा । |
| भानो | भानू | भानवः । | संबोधनम् । |
| भानुम् | भानू | भानून् । | द्वितीया । |
| भानुना | भानुभ्याम् | भानुभिः । | तृतीया । |
| भानवे | भानुभ्याम् | भानुभ्यः । | चतुर्थी । |
| भानोः | भानुभ्याम् | भानुभ्यः । | पञ्चमी । |
| भानोः | भान्वोः | भानूनाम् । | षष्ठी । |
| भानौ | भान्वोः | भानुषु । | सप्तमी । |

## ६. ईकारान्तः स्त्रीलिंगः नदी-शब्दः ।

| | | | |
|---|---|---|---|
| नदी | नद्यौ | नद्यः । | प्रथमा । |
| नदि | नद्यौ | नद्यः । | संबोधनम् । |
| नदीम् | नद्यौ | नदीः । | द्वितीया । |
| नद्या | नदीभ्याम् | नदीभिः । | तृतीया । |
| नद्यै | नदीभ्याम् | नदीभ्यः । | चतुर्थी । |
| नद्याः | नदीभ्याम् | नदीभ्यः । | पञ्चमी । |
| नद्याः | नद्योः | नदीनाम् । | षष्ठी । |
| नद्याम् | नद्योः | नदीषु । | सप्तमी । |

लक्ष्मी-शब्दस्य प्रथमायाः एकवचनं लक्ष्मीः, शेषं सर्वम् नदी-शब्दवत् ज्ञेयम् ।

## ७. ऊकारान्तः स्त्रीलिंगः वधू-शब्दः ।

| | | | |
|---|---|---|---|
| वधूः | वध्वौ | वध्वः । | प्रथमा । |
| वधु | वध्वौ | वध्वः । | संबोधनम् । |
| वधूम् | वध्वौ | वधूः । | द्वितीया । |
| वध्वा | वधूभ्याम् | वधूभिः । | तृतीया । |
| वध्वै | वधूभ्याम् | वधूभ्यः । | चतुर्थी । |
| वध्वाः | वधूभ्याम् | वधूभ्यः । | पञ्चमी । |
| वध्वाः | वध्वोः | वधूनाम् । | षष्ठी । |
| वध्वाम् | वध्वोः | वधूषु । | सप्तमी । |

## ८. इकारान्तः पुंलिंगः पति-शब्दः ।

| | | | |
|---|---|---|---|
| पतिः | पती | पतयः । | प्रथमा । |
| पते | पती | पतयः । | संबोधनम् । |
| पतिम् | पती | पतीन् । | द्वितीया । |
| पत्या | पतिभ्याम् | पतिभिः । | तृतीया । |
| पत्ये | पतिभ्याम् | पतिभिः । | चतुर्थी । |
| पत्युः | पतिभ्याम् | पतिभ्यः । | पञ्चमी । |
| पत्युः | पत्योः | पतीनाम् । | षष्ठी । |
| पत्यौ | पत्योः | पतिषु । | सप्तमी । |

## ९. इकारान्त : स्त्रीलिंगः मति-शब्दः ।

| | | | |
|---|---|---|---|
| मतिः | मती | मतयः । | प्रथमा । |
| मते | मती | मतयः । | संबोधनम् । |
| मतिम् | मती | मतीः । | द्वितीया । |
| मत्या | मतिभ्याम् | मतिभिः । | तृतीया । |
| मतये, मत्यै | मतिभ्याम् | मतिभ्यः | चतुर्थी । |
| मतेः, मत्याः | मतिभ्याम् | मतिभ्यः । | पञ्चमी । |
| मतेः, मत्याः | मत्योः | मतीनाम् । | षष्ठी । |
| मतौ, मत्याम् | मत्योः | मतिषु । | सप्तमी । |

## १०. इकारान्तः नपुंसकलिंगः वारि-शब्दः ।

| | | | |
|---|---|---|---|
| वारि | वारिणी | वारीणि । | प्रथमा । |
| वारि, वारे | वारिणी | वारीणि । | संबोधनम् । |
| वारि | वारिणी | वारीणि । | द्वितीया । |
| वारिणा | वारिभ्याम् | वारिभिः । | तृतीया । |
| वारिणे | वारिभ्याम् | वारिभ्यः । | चतुर्थी । |
| वारिणः | वारिभ्याम् | वारिभ्यः । | पञ्चमी । |
| वारिणः | वारिणोः | वारीणाम् । | षष्ठी । |
| वारिणि | वारिणोः | वारिषु । | सप्तमी । |

## ११. ईकारान्तः स्त्रीलिंगः स्त्री–शब्दः ।

| | | | |
|---|---|---|---|
| स्त्री | स्त्रियौ | स्त्रियः । | प्रथमा । |
| स्त्रि | स्त्रियौ | स्त्रियः । | संबोधनम् । |
| स्त्रियम्, स्त्रीम् | स्त्रियौ | स्त्रियः, स्त्रीः । | द्वितीया । |
| स्त्रिया | स्त्रीभ्याम् | स्त्रीभिः । | तृतीया । |
| स्त्रियै | स्त्रीभ्याम् | स्त्रीभ्यः । | चतुर्थी । |
| स्त्रियाः | स्त्रीभ्याम् | स्त्रीभ्यः । | पञ्चमी । |
| स्त्रियाः | स्त्रियोः | स्त्रीणाम् । | षष्ठी । |
| स्त्रियाम् | स्त्रियोः | स्त्रीषु । | सप्तमी । |

## १२. उकारान्तः स्त्रीलिंगः धनु—शब्दः ।

| | | | |
|---|---|---|---|
| धेनुः | धेनू | धेनवः । | प्रथमा । |
| धेनो | धेनू | धेनवः । | संबोधनम् । |
| धेनुम् | धेनू | धेनूः । | द्वितीया । |
| धेन्वा | धेनुभ्याम् | धेनुभिः । | तृतीया । |
| धेन्वै, धेनवे | धेनुभ्याम् | धेनुभ्यः । | चतुर्थी । |
| धेन्वाः, धेनोः | धेनुभ्याम् | धेनुभ्यः । | पञ्चमी । |
| धेन्वाः, धेनोः | धेन्वोः | धेनूनाम् । | षष्ठी । |
| धेन्वाम्, धेनौ | धेन्वोः | धेनुषु । | सप्तमी । |

## १३. उकारान्तः नपुंसकलिंगः मधु—शब्दः ।

| | | | |
|---|---|---|---|
| मधु | मधुनी | मधूनि । | प्रथमा । |
| मधो, मधु | मधुनी | मधूनि । | संबोधनम् । |
| मधु | मधुनी | मधूनि । | द्वितीया । |
| मधुना | मधुभ्याम् | मधुभि । | तृतीया । |
| मधुने | मधुभ्याम् | मधुभ्यः । | चतुर्थी । |
| मधुनः | मधुभ्याम् | मधुभ्यः । | पञ्चमी । |
| मधुनः | मधुनोः | मधूनाम् । | षष्ठी । |
| मधुनि | मधुनोः | मधुषु । | सप्तमी । |

## १४. स्त्रीलिंगः वाच्—शब्दः ।

| | | | |
|---|---|---|---|
| वाक् | वाचौ | वाचः | प्रथमा । |
| वाक् | वाचौ | वाचः | संबोधनम् |
| वाचम् | वाचौ | वाचः | द्वितीया । |
| वाचा | वाग्भ्याम् | वाग्भिः | तृतीया । |
| वाचे | वाग्भ्याम् | वाग्भ्यः | चतुर्थी । |
| वाचः | वाग्भ्याम् | वाग्भ्यः | पञ्चमी । |
| वाचः | वाचोः | वाचाम् | षष्ठी । |
| वाचि | वाचोः | वाक्षु | सप्तमी । |

## १५. ऋकारान्तः पुंलिंगः दातृ—शब्दः ।

| | | | |
|---|---|---|---|
| दाता | दातारौ | दातारः | प्रथमा । |
| दातः | दातारौ | दातारः । | संबोधनम् । |
| दातारम् | दातारौ | दातॄन् । | द्वितीया । |
| दात्रा | दातृभ्याम् | दातृभिः । | तृतीया । |
| दात्रे | दातृभ्याम् | दातृभ्यः । | चतुर्थी । |
| दातुः | दातृभ्याम् | दातृभ्यः । | पञ्चमी । |
| दातुः | दात्रोः | दातॄणाम् । | षष्ठी । |
| दातरि | दात्रोः | दातृषु । | सप्तमी । |

## १६. ऋकारान्तः पुंलिंगः पितृ—शब्दः ।

| | | | |
|---|---|---|---|
| पिता | पितरौ | पितरः । | प्रथमा । |
| पितः | पितरौ | पितरः । | संबोधनम् । |
| पितरम् | पितरौ | पितॄन् । | द्वितीया । |
| पित्रा | पितृभ्याम् | पितृभिः । | तृतीया । |
| पित्रे | पितृभ्याम् | पितृभ्यः । | चतुर्थी । |
| पितुः | पितृभ्याम् | पितृभ्यः । | पञ्चमी । |
| पितुः | पित्रोः | पितॄणाम् । | षष्ठी । |
| पितरि | पित्रोः | पितृषु । | सप्तमी । |

## १७. ऋकारान्तः स्त्रीलिंगः मातृ—शब्दः ।

| | | | |
|---|---|---|---|
| माता | मातरौ | मातरः । | प्रथमा । |
| मातः | मातरौ | मातरः । | संबोधनम् । |
| मातरम् | मातरौ | मातॄः । | द्वितीया । |
| मात्रा | मातृभ्याम् | मातृभिः । | तृतीया । |
| मात्रे | मातृभ्याम् | मातृभ्यः । | चतुर्थी । |
| मातुः | मातृभ्याम् | मातृभ्यः । | पञ्चमी । |
| मातुः | मात्रोः | मातॄणाम् । | षष्ठी । |
| मातरि | मात्रोः | मातृषु । | सप्तमी । |

## १८. पुंलिंगः भगवत्–शब्दः ।

| | | | |
|---|---|---|---|
| भगवान् | भगवन्तौ | भगवन्तः | प्रथमा |
| भगवन् | भगवन्तौ | भगवन्तः | सम्बोधनम् |
| भगवन्तम् | भगवन्तौ | भगवतः | द्वितीया |
| भगवता | भगवद्भ्याम् | भगवद्भिः | तृतीया |
| भगवते | भगवद्भ्याम् | भगवद्भ्यः | चतुर्थी |
| भगवतः | भगवद्भ्याम् | भगवद्भ्यः | पञ्चमी |
| भगवतः | भगवतोः | भगवताम् | षष्ठी |
| भगवति | भगवतोः | भगवत्सु | सप्तमी |

## १९. पुंलिंगः धनिन्–शब्दः ।

| | | | |
|---|---|---|---|
| धनी | धनिनौ | धनिनः | प्रथमा |
| धनिन् | धनिनौ | धनिनः | सम्बोधनम् |
| धनिनम् | धनिनौ | धनिनः | द्वितीया |
| धनिना | धनिभ्याम् | धनिभिः | तृतीया |
| धनिने | धनिभ्याम् | धनिभ्यः | चतुर्थी |
| धनिनः | धनिभ्याम् | धनिभ्यः | पञ्चमी |
| धनिनः | धनिनोः | धनिनाम् | षष्ठी |
| धनिनि | धनिनोः | धनिषु | सप्तमी |

## २०. पुंलिंगः श्रीमत्–शब्दः ।

| | | | |
|---|---|---|---|
| श्रीमान् | श्रीमन्तौ | श्रीमन्तः | प्रथमा |
| श्रीमन् | श्रीमन्तौ | श्रीमन्तः | सम्बोधनम् |
| श्रीमन्तम् | श्रीमन्तौ | श्रीमतः | द्वितीया |
| श्रीमता | श्रीमद्भ्याम् | श्रीमद्भिः | तृतीया |
| श्रीमते | श्रीमद्भ्याम् | श्रीमद्भ्यः | चतुर्थी |
| श्रीमतः | श्रीमद्भ्याम् | श्रीमद्भ्यः | पञ्चमी |
| श्रीमतः | श्रीमतोः | श्रीमताम् | षष्ठी |
| श्रीमति | श्रीमतोः | श्रीमत्सु | सप्तमी |

२१. [अ] सर्वनाम-संज्ञकः पुंलिंगः तद्--शब्दः ।

| | | | |
|---|---|---|---|
| सः | तौ | ते | प्रथमा |
| तम् | तौ | तान् | द्वितीया |
| तेन | ताभ्याम् | तैः | तृतीया |
| तस्मै | ताभ्याम् | तेभ्यः | चतुर्थी |
| तस्मात् | ताभ्याम् | तेभ्यः | पञ्चमी |
| तस्य | तयोः | तेषाम् | षष्ठी |
| तस्मिन् | तयोः | तेषु | सप्तमी |

२१. (आ) स्त्रीलिंगः तद्-शब्दः ।

| | | | |
|---|---|---|---|
| सा | ते | ताः । | प्रथमा । |
| ताम् | ते | ताः । | द्वितीया। |
| तया | ताभ्याम् | ताभिः । | तृतीया । |
| तस्यै | ताभ्याम् | ताभ्यः । | चतुर्थी । |
| तस्याः | ताभ्याम् | ताभ्यः । | पञ्चमी। |
| तस्याः | तयोः | तासाम् । | षष्ठी । |
| तस्याम् | तयोः | तासु । | सप्तमी । |

२१. (इ) नपुंसकलिंगः तद्-शब्दः ।

| | | | |
|---|---|---|---|
| तत् | ते | तानि । | प्रथमा । |
| तत् | ते | तानि । | द्वितीया। |

शेष-रूपाणि पुंलिंगवत् ज्ञेयानी ।

२२. (अ) सर्वनाम-संज्ञकः पुंलिंगः यद्-शब्दः ।

| | | | |
|---|---|---|---|
| यः | यौ | ये । | प्रथमा । |

शेष-रूपाणि 'तद्'-नायक-शब्दवत् ज्ञेयानि ।

२२. (आ) सर्वनाम-संज्ञकः स्त्रीलिंगः यद्-शब्दः ।

| | | | |
|---|---|---|---|
| या | ये | याः । | प्रथमा । |

शेष-रूपाणि 'तद्'-नायक-शब्दवत् ज्ञेयानि ।

२२. (इ) सर्वनाम-संज्ञकः नपुंसक-लिंगः यद्-शब्दः ।

| | | | |
|---|---|---|---|
| यत् | ये | यानि । | प्रथमा । |

शेष-रूपाणि 'तद्'-नायक-शब्दवत् ज्ञेयानि ।

२३. (अ) सर्वनाम-संज्ञकः पुंलिंगः एतद्-शब्दः ।

| | | | |
|---|---|---|---|
| एषः | एतौ | एते । | प्रथमा । |
| एतम्, एनम् | एतौ, एनौ, | एतान्, एनान् । | द्वितीया । |
| एतेन, एनेन | एताभ्याम्, | एनाभ्याम्, एतैः । | तृतीया । |
| एतस्मै | एताभ्याम् | एतेभ्यः । | चतुर्थी । |
| एतस्मात् | एताभ्याम् | एतेभ्यः । | पञ्चमी । |
| एतस्य | एतयोः, एनयोः | एतेषाम् । | षष्ठी । |
| एतस्मिन् | एतयोः, एनयोः | एतेषु । | सप्तमी । |

२३. (आ) सर्वनाम-संज्ञकः स्त्रीलिंगः एतद्-शब्दः ।

| | | | |
|---|---|---|---|
| एषा | एते | एताः । | प्रथमा । |
| एताम्, एनाम् | एते, एने | एताः, एनाः । | द्वितीया । |
| एतया, एनया | एताभ्याम् | एताभिः । | तृतीया । |
| एतस्यै | एताभ्याम् | एताभ्यः । | चतुर्थी । |
| एतस्याः | एताभ्याम् | एताभ्यः । | पञ्चमी । |
| एतस्याः | एतयोः, एनयोः | एतासाम् । | षष्ठी । |
| एतस्याम् | एतयोः, एनयोः | एतासु । | सप्तमी । |

२३. (इ) सर्वनाम-संज्ञकः नपुंसकलिंगः एतद्-शब्दः ।

| | | | |
|---|---|---|---|
| एतत् | एते | एतानि । | प्रथमा । |
| एतत्, एनत् | एते, एने | एतानि, एनानि । | द्वितीया । |

शेष-रूपाणि पुंलिंगवत् ज्ञेयानि ।

२४. (अ) सर्व नाम-संज्ञकः पुंलिंगः किम्-शब्दः ।

| | | | |
|---|---|---|---|
| कः | कौ | के | प्रथमा । |

शेष-रूपाणि 'तद्'-नायक-शब्दवत् ज्ञेयानि ।

२४. (आ) सर्वनाम-संज्ञकः स्त्रीलिंगः किम्-शब्दः ।

| | | | |
|---|---|---|---|
| का | के | काः | प्रथमा । |

शेष-रूपाणि 'तद्'-नायक-शब्दवत् ज्ञेयानि ।

२४. (इ) सर्वनाम-संज्ञकः नपुंसकलिंगः किम्-शब्दः ।

| | | | |
|---|---|---|---|
| किम् | के | कानि | प्रथमा । |

शेष-रूपाणि 'तद्'-नायक-शब्दवत् ज्ञेयानि ।

२५. (अ) सर्वनाम-संज्ञकः पुंलिंगः इदम्-शब्दः ।

| | | | |
|---|---|---|---|
| अयम् | इमौ | इमे । | प्रथमा । |
| इमम्, एनम् | इमौ, एनौ | इमान्, एनान् | द्वितीया । |
| अनेन, एनेन | आभ्याम् | एभिः । | तृतीया । |
| अस्मै | आभ्याम् | एभ्यः । | चतुर्थी । |
| अस्मात् | आभ्याम् | एभ्यः । | पञ्चमी । |
| अस्य | अनयोः, एनयोः | एषाम् । | षष्ठी । |
| अस्मिन् | अनयोः, एनयोः | एषु । | सप्तमी । |

२५. (आ) सर्वनाम-संज्ञकः स्त्रीलिंगः इदम्-शब्दः ।

| | | | |
|---|---|---|---|
| इयम् | इमे | इमाः । | प्रथमा । |
| इमाम्, एनाम् | इमे, एने | इमाः, एनाः । | द्वितीया । |
| अनया, एनया | आभ्याम् | आभिः । | तृतीया । |
| अस्यै | आभ्याम् | आभ्यः । | चतुर्थी । |
| अस्याः | आभ्याम् | आभ्यः । | पञ्चमी । |
| अस्याः | अनयोः, एनयोः | आसाम् । | षष्ठी । |
| अस्याम् | अनयोः, एनयोः | आसु । | सप्तमी । |

२५. (इ) सर्वनाम-संज्ञकः नपुंसकलिंगः इदम्-शब्दः ।

| | | | |
|---|---|---|---|
| इदम् | इमे | इमानि । | प्रथमा । |
| इदम्, एनत् | इमे, एने | इमानि, एनानि । | द्वितीया । |

शेष-रूपाणि पुंलिङ्गवत् ज्ञेयानि ।

२६. (अ) सर्वनाम-संज्ञकः पुंलिंगः अदस्-शब्दः ।

| | | | |
|---|---|---|---|
| असौ | अमू | अमी । | प्रथमा । |
| अमुम् | अमू | अमून् । | द्वितीया । |
| अमुना | अमूभ्याम् | अमीभिः । | तृतीया । |
| अमुष्मै | अमूभ्याम् | अमीभ्यः । | चतुर्थी । |
| अमुष्मात् | अमूभ्याम् | अमीभ्यः । | पञ्चमी । |
| अमुष्य | अमुयोः | अमीषाम् । | षष्ठी । |
| अमुष्मिन् | अमुयोः | अमीषु । | सप्तमी । |

२६. (आ) सर्वनाम-संज्ञकः नपुंसकलिंगः अदस्-शब्दः ।

| | | | |
|---|---|---|---|
| अदः | अमू | अमूनि । | प्रथमा । |
| अदः | अमू | अमूनि । | द्वितीया । |
| अमुना | अमूभ्याम् | अमीभिः । | तृतीया । |
| अमुष्मै | अमूभ्याम् | अमीभ्यः । | चतुर्थी । |
| अमुष्मात् | अमूभ्याम् | अमीभ्यः । | पञ्चमी । |
| अमुष्य | अमुयोः | अमीषाम् । | षष्ठी । |
| अमुष्मिन् | अमुयोः | अमीषु । | सप्तमी । |

२६. (इ) सर्वनाम-संज्ञकः स्त्रीलिंगः अदस्-शब्दः ।

| | | | |
|---|---|---|---|
| असौ | अमू | अमूः । | प्रथमा । |
| अमूम् | अमू | अमूः । | द्वितीया । |
| अमुया | अमूभ्याम् | अमूभिः । | तृतीया । |
| अमुष्यै | अमूभ्याम् | अमूभ्यः । | चतुर्थी । |
| अमुष्याः | अमूभ्याम् | अमूभ्यः । | पञ्चमी । |
| अमुष्याः | अमुयोः | अमूषाम् । | षष्ठी । |
| अमुष्याम् | अमुयोः | अमूषु । | सप्तमी । |

## २७. त्रिषु लिंगेषु समः अस्मद्-शब्दः ।

| | | | |
|---|---|---|---|
| अहम् | आवाम् | वयम् । | प्रथमा । |
| माम्, मा | आवाम्, नौ | अस्मान्, नः । | द्वितीया । |
| मया | आवाभ्याम् | अस्माभिः । | तृतीया । |
| मह्यम्, मे | आवाभ्यम्, नौ | अस्मभ्यम्, नः । | चतुर्थी । |
| मत् | आवाभ्याम् | अस्मत् । | पञ्चमी । |
| मम, मे | आवयोः, नौ | अस्माकम्, नः | षष्ठी । |
| मयि | आवयोः | अस्मासु । | सप्तमी । |

## २८. त्रिषु लिंगेषु समः युष्मद्-शब्दः ।

| | | | |
|---|---|---|---|
| त्वम् | युवाम् | यूयम् । | प्रथमा । |
| त्वाम्, त्वा | युवाम्, वाम् | युष्मान्, वः । | द्वितीया । |
| त्वया | युवाभ्याम् | युष्माभिः । | तृतीया । |
| तुभ्यम्, ते | युवाभ्याम्, वाम् | युष्मभ्यम्, वः । | चतुर्थी । |
| त्वत् | युवाभ्याम् | युष्मत् । | पञ्चमी । |
| तव, ते | युवयोः, वाम् | युष्माकम्, वः । | षष्ठी । |
| त्वयि | युवयोः | युष्मासु । | सप्तमी । |

## २९. (अ) सर्वनामसंज्ञकः पुंलिंगः सर्व-शब्दः ।

| | | | |
|---|---|---|---|
| सर्वः | सर्वौ | सर्वे । | प्रथमा । |

शेष-रूपाणि 'तद्'-नायक-शब्दवत् ज्ञेयानि ।

## २९. (आ) सर्वनामसंज्ञकः स्त्रीलिंगः सर्व-शब्दः ।

| | | | |
|---|---|---|---|
| सर्वा | सर्वे | सर्वाः । | प्रथमा । |

शेष-रूपाणि 'तद्'-नायक-शब्दवत् ज्ञेयानि ।

## २९. (इ) सर्वनाम-संज्ञकः नपुंसकलिंगः सर्व-शब्दः ।

| | | | |
|---|---|---|---|
| सर्वम् | सर्वे | सर्वाणि । | प्र० द्वि० |

शेष-रूपाणि पुंलिङ्गवत् ज्ञेयानि ।

## ३०. संख्या-विशेषणानि ।

एक— ( एकवचने एव )

| | प्र० | द्वि० | तृ० | च० | पं० | ष० | स० |
|---|---|---|---|---|---|---|---|
| पुं० | एकः | एकम् | एकेन | एकस्मै | एकस्मात् | एकस्य | एकस्मिन् |
| न० | एकम् | ,, | ,, | ,, | ,, | ,, | ,, |
| स्त्री० | एका | एकाम् | एकया | एकस्यै | एकस्याः | एकस्याः | एकस्याम् |

द्वि— ( द्विवचने एव )

| | प्र. | द्वि. | तृ. | च. पं. | ष. | स. |
|---|---|---|---|---|---|---|
| पुं० | द्वौ | द्वौ | द्वाभ्याम् | द्वाभ्याम् | द्वयोः | द्वयोः |
| न० | द्वे | द्वे | ,, | ,, | ,, | ,, |
| स्त्री० | द्वे | द्वे | ,, | ,, | ,, | ,, |

त्रि— ( बहुवचने एव )

| | | | | | | |
|---|---|---|---|---|---|---|
| पुं० | त्रयः | त्रीन् | त्रिभिः | त्रिभ्यः | त्रयाणाम् | त्रिषु |
| न० | त्रीणि | त्रीणि | ,, | ,, | ,, | ,, |
| स्त्री० | तिस्रः | तिस्रः | तिसृभिः | तिसृभ्यः | तिसृणाम् | तिसृषु |

चतुर्—( बहुवचने एव )

| | | | | | | |
|---|---|---|---|---|---|---|
| पुं० | चत्वारः | चतुरः | चतुर्भि | चतुर्भ्यः | चतुर्णाम् | चतुर्षु |
| न० | चत्वारि | चत्वारि | ,, | ,, | ,, | ,, |
| स्त्री० | चतस्रः | चतस्रः | चतसृभिः | चतसृभ्यः | चतसृणाम् | चतसृषु |

त्रिषु लिङ्गेषु समम् एव रूपम्

| | प्र० द्वि० | तृ० | च० पं० | ष० | स० |
|---|---|---|---|---|---|
| पञ्चन्— | पञ्च | पञ्चभिः | पञ्चभ्यः | पञ्चानाम् | पञ्चसु |
| षट् — | षट् | षड्भिः | षड्भ्यः | षण्णाम् | षट्सु |
| सप्तन् — | सप्त | सप्तभिः | सप्तभ्यः | सप्तानाम् | सप्तसु |
| अष्टन् — | अष्ट | अष्टभिः | अष्टभ्यः | अष्टानाम् | अष्टसु |
| | अष्टौ | अष्टाभिः | अष्टाभ्यः | | अष्टासु |
| नवन् — | नव | नवभिः | नवभ्यः | नवानाम् | नवसु |
| दशन् — | दश | दशभिः | दशभ्यः | दशानाम् | दशसु |

संस्कृत–भाषा–प्रचारि–सभायाः

# मौखिक-संस्कृत-परीक्षाः

संस्कृत-भाषाप्रचारि-सभायाः निम्न-लिखित-मौखिक-परीक्षाः प्रतिवर्षं भविष्यन्ति। एताः सर्वाः परीक्षाः मौखिक्यः एव वर्तन्ते। परीक्षाः प्रतिवर्षं द्विवारं ख्रिस्ताब्दस्य प्रथमे मासि अष्टमे मासि च (एवं हेमन्ततौं वर्षर्तौ च) भविष्यन्ति। द्वयोः परीक्षयोः मध्ये भवेत् षण्मासानाम् अन्तरम्। नागपुर-स्थाः नागपुरात् बहिःस्थाः च परीक्षार्थिनः बालक-बालिकाः च परीक्षार्हाः भवेयुः। परीक्षा-शुल्कं प्रतिछात्रं चतुराणकं केवलम्। यदि दशसंख्याधिकाः परीक्षार्थिनः आवेदन-पत्रं सर्वकार-मान्य-विद्यालयस्य मुख्याध्यापकद्वारा प्रेषयिष्यन्ति तर्हि परीक्षा-केन्द्रस्य आयोजनं मुख्याध्यापक–महाभागस्य सहकार्येण कर्तुं शक्यते। आवेदन–पत्राणि परीक्षाशुल्केन सह परीक्षा–मासस्य मासपूर्वं प्रेषणीयानि। आवेदन-पत्रे परीक्षार्थिनः नाम, पितुः नाम, कुल-नाम, वयः, पाठशालां, निवास-स्थानं, केन्द्र-नाम च लिखन्तु। परीक्षोत्तीर्णच्छात्रेभ्यः प्रमाण-पत्राणि प्रदीयन्ते यथासमयम्। श्रेणिगुणानां प्रतिशतता अधोलिखिता भवेत्—

| | |
|---|---|
| प्रथम–श्रेणिः | ८०–१०० |
| द्वितीय–श्रेणिः | ६०–७९ |
| तृतीय–श्रेणिः | ४०–५९ |
| प्रावीण्यम् | ९०–१०० |

एतासां परीक्षाणां नामानि पाठ्य-क्रमः पुस्तक-नामानि च अधः लिख्यन्ते। अभ्यास-क्रमान्तर्गतानां द्वादश-पाठ्य-पुस्तिकानां मूल्यम् आणक-द्वयं प्रत्येकम्।

**प्रथम–परीक्षा–**

१. बालामृत-शतश्लोकी*
२. सुलभ-शब्द-रूपावलिः*
३. व्यवहार-प्रश्नोत्तरी*

**द्वितीय–परीक्षा–**

४. उपयुक्त-धातुरूपावलिः*
५. हितोपदेश-कथाः*
६. संक्षिप्तामरकोशः*
प्रथम-परीक्षायाः पाठ्य-क्रमः च।

**तृतीय–परीक्षा–**

७. छात्रामृत-शतश्लोकी*
८. रामायण-कथा*
९. व्यवहार-सूक्तावलिः*
द्वितीय-परीक्षायाः पाठ्य-क्रमः च।

**संस्कृत–प्रवेश–परीक्षा–**

१०. महाभारत-कथाः*
११. नाट्य-प्रवेशः
१२. कौमुदी-प्रवेशः
तृतीय-परीक्षायाः पाठ्य-क्रमः च।

*मुद्रिताः धर्मपीठम्, नागपुरम् १

स. ना. कुलकर्णी
सं. भा. प्र. सभायाः
प्रमुख-कार्यवाहः




इयं पुस्तिका वर्धानगरस्थ-राष्ट्रभाषा-प्रचार-समितेः मुद्रणालये मुद्रिता नागपुरस्थ-संस्कृतभाषाप्रचारि-सभाद्वारा प्रमुख-कार्यवाहेन धर्मपीठे कुलकर्णी-भवने प्रकाशतां च नीता।

संस्कृत-भाषा-प्रचार-वाङ्मयमाला

# व्यवहार-प्रश्नोत्तरी

[ बालानां कृते ]

( हिन्दी-संस्करणम् )

श्रीमताम्
अग्रवाल-कुलावतंसानां
रा. सा. गोपीकिसन-
महोदयानां
दानानुग्रहफलम् इदम् ।



रचयिता—स. ना. कुलकर्णी





तृतीय-पुष्पम् ]  १९५४  [ मूल्यम् आणक-द्वयम्

# हृद्गतम्

मोदते मे मनः इदं संस्कृत-भाषा-वाङ्मय-प्रचार-मालायाः तृतीयं पुष्पं संस्कृतानुरागिभ्यः समर्पयितुम्। अस्यां पुस्तिकायां बालकानां दैनंदिन-जीवने आवश्यकानां दैनिक-व्यवहारोपयोगि-प्रश्नोत्तराणां समावेशः कृतः अस्ति। एतेषां कण्ठस्थीकरणेन बालानां संस्कृत-भाषा-व्यवहारे भवेत् प्राथमिकः प्रवेशः, तेषां मनसि च समुद्भवेत् कश्चित् अवर्णनीयः आनन्दः यत् ते संस्कृत-भाषायाम् अन्य-जनैः पृष्टानां प्रश्नानाम् उत्तराणि दातुं समर्थाः भवन्ति इति। बालेभ्यः तादृशं शिक्षणम् अधिकतरं रोचते यत् क्रियात्मकं भवेत्। अत्र विद्यते तेषां कृते अवसरः यस्मिन् ते कण्ठस्थीकृतानां वाक्यानाम् उपयोगेन स्वाभिलषितं व्यक्तं कर्तुम् प्रभवन्ति। तद् एव ज्ञानं हृद्यं भवति यत् क्रियारूपेण परिणमते। मन्ये एते पाठाः बाल-बालिकानां संस्कृतानुराग-संवर्धनाय कल्पेरन्।

उच्यते किंचित् अस्य पुस्तकस्य उपयोगः कथं कर्तव्यः इति अस्मिन् विषये। सर्वत्र हिन्दी-भाषायां वाक्यानाम् अनुवादः दत्तः। ये संस्कृतं न जानन्ति तेषाम् अध्यापकानाम् अपि संस्कृत-वाक्यानाम् सुखबोधाय सः उपयुक्तः भवेत्। प्रत्येकस्य शब्दस्य, शब्दरूपस्य वा अर्थः अनुवादेन व्यक्तिशः स्पष्टः भवेत्। अर्थग्रहणानन्तरं हिन्दी-शब्दानां, वाक्यानां वा पुनरुपयोजनं शाखा-द्वारा चन्द्रदर्शनानन्तरम् निरर्थकम् एव, अतः सर्वथा त्याज्यम्। अर्थ-प्रबोधानन्तरं छात्रणां संभाषणाय वारंवारम् अवसरः देयः। कश्चित् बालकः प्रश्नं पृच्छति अन्यः कश्चित् प्रश्नस्य उत्तरं ददाति, अपरः कश्चित् पुनः प्रश्नं पृच्छति, इति अनया रीत्या पाठः प्रवर्तनीयः। यत्र यत्र क्रिया विद्यते तत्र तत्र यावच्छक्यं तां प्रत्यक्षं कर्तुम् सर्वेभ्यः छात्रेभ्यः अवसरः देयः। यथा कूर्दने, उपवेशने, धावने, हसने, रोदने, स्पर्शने, भक्षणे इत्यादिषु क्रियासु। अनेन विधिना शब्दस्य क्रियार्थस्य च दृढा संगतिः भवेत्। एवं हि यत्र यत्र शक्यं तत्र तत्र पाठेषु निर्दिष्टानि वस्तूनि आनीय तेषां प्रदर्शनम् अवश्यं करणीयम्, कुत्रचित् प्रत्यक्षं वस्तु प्रदर्श्य, कुत्रचित् तद्वस्तुनः चित्रं पुरः स्थापयित्वा, कुत्रचित् तद्वस्तुनः आकृतिं विलिख्य, कुत्रचित् तद्वस्तुनः प्रतिकृतिं दर्शयित्वा, कुत्रचित् अङ्गुल्या निर्दिश्य वा।

पाठे पाठे केचन शब्दाः स्थूल-टङ्केन मुद्रिताः सन्ति। तेषां स्थाने आवश्यकतानुसारं परिस्थित्यनुसारं च निवेशयितव्यानि अन्यानि शब्दरूपाणि—कोष-विस्तर-नामके विभागे प्रतिपाठं दत्तानि। एतेषां शब्दरूपाणां तत्तच्छब्दस्थाने उपयोगं कर्तुम् छात्रेभ्यः अवसरः देयः, यथा सर्वेषां छात्राणां वारः समायायात्। शब्दकोषसंवर्धनाय अन्ते अन्येषाम् तत्तद्विषय-सम्बधिनाम् उपयुक्त-शब्दानां सूचिः अपि अन्तर्भूता अस्ति। तेषां शब्दानां ज्ञानम् अपि छात्राणाम् इष्टम्।

सर्वेषां पाठानां कण्ठस्थीकरणं तु भवेत् एव प्रधानं ध्येयम्। तत् सतताभ्यासेन साध्यं भवेत् इति न अस्ति संदेहलेशः अपि।

धर्मपीठम् नागपुरम् १.
गुरुपूर्णिमा शके १८७६
दिनांक: १५।७।५४

स. ना. कुलकर्णी
प्रमुख–कार्यवाहः
संस्कृत-भाषा-प्रचारिणी सभा

# १. प्रारम्भिकः पाठः

१. बाल (बाले). आगच्छ। २. वल। ३. गच्छ।
४. उपविश। ५. उत्तिष्ठ। ६. चल।
७. तिष्ठ। ८. हस। ९. मा रुदिहि।
१०. मा गच्छ। ११. धाव। १२. पुस्तकम् गृहाण।
१३. पुस्तकं देहि। १४. वृक्षं पश्य। १५. फलम् आनय।
१६. पुष्पं नय। १७. वाक्यं वद। १८. पाठं पठ।
१९. पत्रं लिख। २०. लेखनीं स्थापय। २१. ध्वनिं कुरु।
२२. प्रश्नं पृच्छ। २३. उत्तरं देहि। २४. वाक्यं शृणु।
२५. फलं भक्षय। २६. जलं पिब। २७. गुरुं प्रणम।
२८. किशोरं स्पृश। २९. तालिकां वादय। ३०. वस्त्रं धारय।
३१. पुस्तकं त्यज। ३२. कंदुकं धर। ३३. कंदुकं क्षिप।
३४. कूर्द। ३५. बहिः खेल।

अनुवादः—

## १. प्रारम्भिक पाठ

१. बालक (बालिका), आ। २. घूम। ३. जा।
४. बैठ। ५. उठ। ६. चल।
७. ठहर। ८. हँस। ९. मत रो।
१०. मत जा। ११. दौड़। १२. पुस्तक ले।
१३. पुस्तक दे। १४. वृक्ष देख। १५. फल ला।
१६. पुष्प ले जा। १७. वाक्य बोल। १८. पाठ पढ़।
१९. पत्र लिख। २०. लेखनी रख। २१. ध्वनि कर।
२२. प्रश्न पूछ। २३. उत्तर दे। २४. वाक्य सुन।
२५. फल खा। २६. जल पी। २७. गुरुको प्रणाम कर।
२८. किशोरको स्पर्श कर। २९. ताली बजा। ३०. वस्त्र पहिन।
३१. पुस्तक त्याग। ३२. गेंद रख। ३३. गेंद फेंक।
३४. कूद। ३५. बाहर खेल।

कोषविस्तारः—

१. आ+गम् (आगच्छति) आना। २. वल (वलति) घूमना। ३. गम् (गच्छति) जाना।
४. उप+विश् (उपविशति) बैठना। ५. उद्+स्था (उत्तिष्ठति) उठना। ६. चल् (चलति) चलना।
७. स्था (तिष्ठति) ठहरना। ८. हस् (हसति) हँसना। ९. रुद् (रोदिति) रोना।
११. धाव् (धावति) दौड़ना। १२. ग्रह (गृह्णाति) लेना। १३. दा (ददाति) देना।
१४. दृश् (पश्यति) देखना। १५. आ+नी (आनयति) लाना। १६. नी (नयति) लेजाना।
१७. वद् (वदति) बोलना। १८. पठ् (पठति) पढ़ना। १९. लिख् (लिखति) लिखना।
२०. स्था (स्थापयति, प्रेरणार्थक रूप) रखना। २१. कृ (करोति) करना। २२. प्रच्छ् (पृच्छति) पूछना।
२३. श्रु (शृणोति) सुनना। २४. भक्ष् (भक्षयति) खाना। २५. पा (पिबति) पीना।
२६. प्र+नम् (प्रणमति) प्रणाम करना। २७. स्पृश् (स्पृशति) स्पर्श करना। २८. वद् (वादयति, प्रेरणार्थक रूप) बजाना।
२९. धृ (धारयति) पहिनना। ३०. त्यज् (त्यजति) त्यागकरना। ३१. धृ (धरति) पकड़ना।
३२. क्षिप् (क्षिपति) फेंकना। ३३. कूर्द् (कूर्दति) कूदना। ३४. खेल् (खेलति) खेलना।

# २. मम परिचयः

| | |
|---|---|
| १. बाल (बाले), किम् तव नाम ? | मम नाम मुकुन्दः (उमा) इति । |
| २. किम् तव पितुः नाम ? | मम पितुः नाम सरस्वतीप्रसाद इति । |
| ३. किम् तव कुलनाम ? | मम कुलनाम चतुर्वेदी इति । |
| ४. किं तव वयः ? | मम वयः अष्ट-वर्ष-मितम् । |
| ५. किं तव पितुः वयः ? | मम पितुः वयः पञ्चाशत्-वर्ष-मितम् । |
| ६. कति ते भ्रातरः ? | त्रयः भ्रातरः मे । |
| ७. कति ते भगिन्यः ? | चतस्रः भगिन्यः मे । |
| ८. कः ते **ज्येष्ठः** भ्राता ? | प्रभाकरः मे ज्येष्ठः भ्राता । |
| ९. का ते **ज्येष्ठा** भगिनी ? | उमा मे ज्येष्ठा भगिनी । |
| १०. कः ते पितुः व्यवसायः ? | मम पिता **प्राध्यापकः** अस्ति । |

अनुवाद :—

## २. मेरा परिचय

| | |
|---|---|
| १. बालक (बालिका) तुम्हारा नाम क्या है ? | मेरा नाम मुकुन्द (उमा) है । |
| २. तुम्हारे पिताका क्या नाम है ? | मेरे पिताका नाम सरस्वतीप्रसाद है । |
| ३. तुम्हारा कुलनाम क्या है ? | मेरा कुलनाम चतुर्वेदी है । |
| ४. तुम्हारी उम्र क्या है ? | मेरी उम्र आठ वर्ष है । |
| ५. तुम्हारे पिताकी क्या उम्र है ? | मेरे पिताकी उम्र पचास वर्ष है । |
| ६. तुम्हारे कितने भाई हैं ? | मेरे तीन भाई हैं । |
| ७. तुम्हारे कितनी बहनें है ? | मेरी चार बहिनें हैं । |
| ८. तुम्हारा बड़ा भाई कौन है ? | मेरा बड़ा भाई प्रभाकर है । |
| ९. तुम्हारी बड़ी बहिन कौन है ? | मेरी बड़ी बहिन उमा है । |
| १०. तुम्हारे पिताका व्यवसाय क्या है ? | मेरे पिता प्राध्यापक हैं । |

**कोषविस्तार :—** भ्रातुः, मातुः, २ भगिन्याः, पितृव्यस्य, मातुलस्य, पितामहस्य
भाईका, माताका, बहिनका, काकाका, मामाका, आजे (पितामह) का

४. पञ्च, षट्, सप्त, अष्ट, नव, दश, एकादश, द्वादश, त्रयोदश
पाँच, छः, सात, आठ, नौ, दस, ग्यारह, बारह, तेरह

५. विंशति, त्रिंशत्, चत्वारिंशत्, पञ्चाशत्, षष्टि, सप्तति, अशीति, नवति
बीस, तीस, चालीस, पचास, साठ, सत्तर, अस्सी, नब्बे

६. कति, एकः भ्राता, द्वौ भ्रातरौ, त्रयः भ्रातरः, चत्वारः भ्रातरः, न मे भ्राता
कितने, एक भाई, दो भाई, तीन भाई, चार भाई, मेरे भाई नहीं है

७. एका भगिनी, द्वे भगिन्यौ, तिस्रः भगिन्यः चतस्रः भगिन्यः न मे भगिनी
एक बहिन, दो बहिनें, तीन बहिनें, चार बहिनें, मेरे बहिन नहीं है

८. ज्येष्ठ, कनिष्ठ, ९. शिक्षकः, लिपिकः, वाक्कीलः, आपणिकः
जेठ, कनिष्ठ, शिक्षक, क्लर्क, वकील, दुकानदार

# ३. प्रातःक्रमः

१. कदा त्वं प्रबुध्यसे प्रातः ? अहं प्रातः पञ्च-वादन-समये प्रबुध्ये ।
२. ततः किं करोषि त्वम् ? अहं शौच-मुख-मार्जनं करोमि ।
३. दन्तधावने त्वं किम् उपयुङ्क्षे ? **दन्त-मञ्जनम्** अहम् उपयुञ्जे ।
४. अपि त्वं शीतेन जलेन स्नानं करोषि ? **उष्णेन** जलेन स्नानं करोमि ।
५. शीतेन जलेन स्नानं किं न करोषि ? शीतं जलं **माम्** बाधते ।
६. किं त्वं स्वफेनस्य उपयोगं करोषि ? आम्, अहं **स्वफेनस्य** उपयोगं करोमि ।
७. किं तैलं त्वम् उपयुङ्क्षे ? अहम् **मौद्गर-तैलम्** उपयुञ्जे ।
८. किं त्वं व्यायामं करोषि ? प्रत्यहं प्रातः सायं च व्यायामं करोमि ।
९. अपि त्वं चाय-पानं करोषि ? न अहं चायपः, **दुग्ध**-पानं करोमि ।
१०. कदा आरभसे अध्ययनम् ? सप्त-वादनतः आरभे अध्ययनम् ।
११. कदा भवति तव भोजनम् ? सार्ध-नव-वादन-समये ।
१२. कदा त्वं विद्यालयं गच्छसि ? सार्ध-दश-वादन-समये गच्छामि ।

अनुवाद :—

## ३. प्रातःकालीन कार्यक्रम

१. तुम प्रातःकाल कब उठते हो ? मैं प्रातःकाल पाँच बजे उठता हूँ ।
२. तब तुम क्या करते हो ? मैं शौच और मुख-मार्जन करता हूँ ।
३. दाँत साफ़ करनेके लिये तुम किसका उपयोग करते हो ? मैं दन्तमंजनका उपयोग करता हूँ ।
४. क्या तुम शीतल जलसे स्नान करते हो ? मैं उष्ण जलसे स्नान करता हूँ ।
५. शीतल जलसे स्नान क्यों नहीं करते ? शीतल जल मुझको हानि पहुँचाता है ।
६. क्या तुम साबुनका उपयोग करते हो ? हाँ, मैं साबुनका उपयोग करता हूं ।
७. तुम कौनसा तेल उपयोगमें लाते हो ? मैं मोगरेका तेल उपयोगमें लाता हूँ ।
८. क्या तुम व्यायाम करते हो ? मैं प्रतिदिन प्रातःकाल और सायंकाल व्यायाम करता हूँ ।
९. क्या तुम चाय पीते हो ? मैं चाय नहीं पीता, दूध पीता हूँ ।
१०. तुम अध्ययन कबसे आरंभ करते हो ? मैं सात बजेसे अध्ययन आरंभ करता हूँ ।
११. तुम्हारा भोजन कब होता है ? साढ़े नौ बजे ।
१२. तुम विद्यालय कब जाते हो ? साढ़े दस बजे जाता हूँ ।

कोष-विस्तार :—

१. चतुर्– चार, पञ्च- पाँच, षट् छः, सप्त- सात
३. दन्तधावनं दाँत साफ करना, रद-फेनं टूथपेस्ट, रक्षाम् राख
४. उष्णेन, उष्णसे; कवोष्णेन, कुनकुन-से; कौपेन, कुएँका
६. स्वफेनस्य, साबुनका, भूरिफेनायाः सीकाकाईका
७. मौद्गर-तैलं चामेल्यं-तैलं, चन्दन-तैलं मैंदिक-तैलं पाटल-तैलं

# ४. मम विद्यालयः

| | |
|---|---|
| १. अपि त्वं **विद्यालयं** गच्छसि ? | आम्, अहं विद्यालयं गच्छामि । |
| २. किं नाम तव विद्यालयस्य ? | मम विद्यालयस्य नाम पटवर्धन-विद्यालयः इति । |
| ३. कस्मिन् वर्गे पठसि त्वम् ? | **चतुर्थ**-वर्गे पठामि अहम् । |
| ४. कः ते **मुख्याध्यापकः** ? | देशमुख-महाभागः मे मुख्याध्यापकः । |
| ५. त्वं **संस्कृतं** पठसि किम् ? | आम्, अहं संस्कृतं पठामि । |
| ६. कः पाठयति संस्कृतम् ? | नेने-महाभागः पाठयति संस्कृतम् । |
| ७. कदा भवति ते **वार्षिक**-परीक्षा ? | ख्रिस्ताब्दस्य चतुर्थ-मासे । |
| ८. अपि जाता ते षाण्मासिक-परीक्षा? | अथ किम्, गतमासे एव जाता ? |
| ९. अपि त्वम् उत्तीर्णः ताम् परीक्षाम्? | आम्, उत्तीर्णः अहम्, किन्तु न मे [बंधुः । |
| १०. कस्मिन् विषये सः निपतितः ? | गणितविषये सः निपतितः । |
| ११. कः ते गुणानुक्रमाङ्कः ? | द्वितीयः मे गुणानुक्रमाङ्कः । |
| १२. कदा भवति पठनस्य प्रारम्भः ? | एकादश-वादन-समये । |
| १३. कदा छुट्टिः भवति ? | पञ्च-वादन-समये भवति छुट्टिः । |

अनुवाद :—

## ४. मेरा विद्यालय

| | |
|---|---|
| १. क्या तुम विद्यालय जाते हो ? | हाँ, मैं विद्यालय जाता हूँ । |
| २. तुम्हारे विद्यालयका क्या नाम है ? | मेरे विद्यालयका नाम पटवर्धन विद्यालय है । |
| ३. तुम किस कक्षामें पढ़ते हो ? | मैं चौथी कक्षामें पढ़ता हूँ । |
| ४. तुम्हारे मुख्याध्यापक कौन हैं ? | देशमुख महोदय मेरे मुख्याध्यापक हैं । |
| ५. क्या तुम संस्कृत पढ़ते हो ? | हाँ, मैं संस्कृत पढ़ता हूँ । |
| ६. संस्कृत कौन पढ़ाता है ? | नेने महोदय संस्कृत पढ़ाते हैं । |
| ७. तुम्हारी वार्षिक परीक्षा कब होती है ? | ईसवी सन्के चौथे माहमें । |
| ८. क्या तुम्हारी छमाही परीक्षा हो गई ? | हाँ, गत माहमें ही हो गई ? |
| ९. क्या तुम उस परीक्षामें उत्तीर्ण हो गये ? | हाँ, मैं उत्तीर्ण हो गया, परन्तु न मेरा भाई । |
| १०. वह किस विषयमें अनुत्तीर्ण हो गया ? | वह गणित विषयमें अनुत्तीर्ण हो गया । |
| ११. तुम्हारा (कक्षामें) क्या स्थान (नंबर) था ? | मेरा (कक्षामें) द्वितीय स्थान था । |
| १२. पढ़ाई कब शुरू होती है ? | ग्यारह बजे । |
| १३. छुट्टी कब होती है ? | छुट्टी पाँच बजे होती है । |

कोष-विस्तार :— १. विद्यालयं पाठशालां महाविद्यालयं ३. प्रथम द्वितीय
विद्यालयको पाठशालाको, महाविद्यालयको (पहिला) (दूसरा)

| | | | | | | | | |
|---|---|---|---|---|---|---|---|---|
| तृतीय | चतुर्थ | पंचम | षष्ठ | सप्तम | अष्टम | नवम | दशम | एकादश |
| तृतीय (तीसरा) | चौथा | पाँचवाँ | छठवाँ | सातवाँ | आठवाँ | नौवाँ | दसवाँ | ग्यारहवाँ |

| | | | | | |
|---|---|---|---|---|---|
| ४. मुख्याध्यापकः | अध्यापकः | प्राध्यापकः | प्राचार्यः | नायकः | |
| मुख्याध्यापक | अध्यापक | प्राध्यापक | प्रिन्सिपल | कप्तान | |
| ५. संस्कृतम् | गणितम् | विज्ञानम् | चित्रकलां | आंग्लभाषां | हस्त-व्यवसायं |
| संस्कृत | गणित | विज्ञान | चित्रकला | अँग्रेजी | हस्तकला |
| ८. षाण्मासिक | त्रैमासिक | मासिक | साप्ताहिक | निकष | अन्त्य |

# ५. मम भोजन-वेला

१. अपि तव भोजनं जातम्, बाल ? नहि जातं मे भोजनम् ।

२. का ते भोजन-वेला ? सार्ध-नव-वादन-वेला प्रातः, अष्ट-वादन-वेला च सायम् ।

३. का पाकं करोति ? मे माता पाकं करोति ।

४. का परिवेषयति अन्नम् ? मम भगिनी परिवेषयेति अन्नम् ।

५. के के पदार्थाः सन्ति भोजनाय ? वरान्नं, भक्तं, भाजी, पोलिका, कथिका, चटनी च प्रायः भवन्ति ।

६. किं त्वं तिक्तप्रियः मधुरप्रियः वा ? मधुर-प्रियः अहम् ।

७. किं सन्धितं तुभ्यम् रोचते ? निंबू-सन्धितं मह्यम् रोचते ।

८. का चटनी रोचते? दधि-दालिका, दधि-मूलिका तु मह्यं नैव रोचते ।

९. अपि बुभुक्षितः त्वम् ? आम्, अहम् भृशम् बुभुक्षितः, जाता एव मे भोजन-वेला ।

१०. कम् प्रतीक्षसे त्वम् ? तात-पादान् प्रतीक्षे, गोष्ठी-गृहात् सद्यः एव आगमिष्यन्ति ते ।

११. अपि सिद्धः पाकः ? आम्, पाकः तु नियत-वेलायाम् सिद्धः एव भवति । मे माता भृशं सामयिका ।

अनुवादः—

## ५. मेरे भोजनका समय

१. बालक ! क्या तुम्हारा भोजन हो गया ? मेरा भोजन नहीं हुआ ।

२. तुम्हारे भोजन का क्या समय है ? प्रातःकाल साढ़े नौ बजे और सायं काल आठ बजे ।

३. कौन भोजन बनाता है ? मेरी माता भोजन बनाती हैं ।

४. भोजन कौन परोसता है ? मेरी बहिन भोजन परोसती है ।

५. भोजनमें कौन कौनसे पदार्थ होते हैं ? प्रायः दाल, भात, भाजी, रोटी, कढ़ी और चटनी होते हैं ।

६. तुमको चरपरी वस्तुयें प्रिय हैं अथवा मीठी? मुझे मीठी वस्तुएँ प्रिय हैं ।

७. तुम्हें कौनसा अचार अच्छा लगता है ? मुझको नींबू का अचार अच्छा लगता है ।

८.कौनसी चटनी अच्छी लगती है? दही औरदालकी।दही और मूलीकी चटनी मुझे बिलकुल नहीं अच्छी लगती ।

९. क्या तुमको भूख लगी है ? हाँ, मैं बहुत भूखा हूँ ।

१०. तुम किसकी प्रतीक्षा कर रहे (करते) हो? मैं पिताजीकी प्रतीक्षा कर रहा (करता) हूँ; क्लबसे वे शीघ्र ही आवेंगे ।

११. क्या भोजन तैयार हो गया ? हाँ, भोजन तो नियत समय पर तैयार ही हो जाता है । मेरी माँ समयकी बड़ी पाबन्द हैं ।

कोष-विस्तारः—

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| २. | सप्त | अष्ट | नव | दश | एकादश | द्वादश | |
| | सात | आठ | नौ | दस | ग्यारह | बारह | |
| ३. | भगिनी | मातृष्वसा | पितामही | सूदः | पक्त्री | | |
| | बहिन | मौसी | दादी | रसोइया | रसोई बनानेवाली | | |
| ५. | लवणं | तिक्तं | तैलं | घृतं | घृतकं | कृशरा | दधि | तक्रम् |
| | नमक | मीरच | तेल | घी | वनस्पति घी | खिचड़ी | दही | छाछ, मठा |
| ७. | सन्धितं | व्यञ्जनं | निम्बू | आम्र– | करमर्दक– | श्लेष्मातक– | |
| | अचार | व्यञ्जन | नींबू | आमका | करौंदाका | लसोढ़ेका | |

# ६. मम भोजनम्

१. अपि ते क्षुधा भ्रातः ? आम्, विद्यते मे महती क्षुधा, भगिनि ।
२. ते पात्रं परिवेषयेयं किम् ? अथ किम्, सत्वरं परिवेषय मे पात्रम् ।
३. किं वाञ्छसि त्वम् भक्तं वा पोलिकां वा ? पोलिकां वाञ्छामि, भक्तं न वाञ्छामि ।
४. भाजी तिक्ता अस्ति किम् ? भाजी तिक्ता नास्ति ।
५. अपि जलम् शीतम् ? आम्, सुशीतं जलम् ।
६. किं न भक्षयसि शाकम् ? वङ्ग-शाकं मह्यं न रोचते, मा परिवेषय शाकम् ।
७. अपि परिवेषयाणि **घृतकं**, घृतं नास्ति । परिवेषय घृतकं, घृतं महार्घं, वयम् अपि घृतं न सेवामहे ।
८. किं न गृह्णासि **पोलिकाम्**, गृहाण ईषत् । उदरं पूर्णम्, मा आग्रहं कुरु ।
९. न त्वया सम्यक् भोजनं कृतम् । नहि तथा, आकण्ठं भोजनं जातम् ।
१०. अपि वाञ्छसि हस्त-प्रक्षालनाय जलम् ? आम्, देहि जलम् ।
११. त्वं ताम्बूलं भक्षयसि किम् ? न सेवे ताम्बूलं, न अहं ताम्बूल-सेवी ।

अनुवाद :—

## ६. मेरा भोजन

१. भैया, क्या तुम्हें भूख लगी है ? हाँ, बहिन, मुझे बहुत भूख लगी है ।
२. क्या तुम्हारी थाली परसूँ ? हाँ, शीघ्र मेरी थाली परसो।
३. तुम क्या चाहते हो, भात या रोटी ? रोटी चाहता हूँ, भात नहीं ।
४. क्या शाक तीखी है ? शाक चरपरी नहीं है ।
५. क्या जल शीतल है ? हाँ, जल बहुत शीतल है ।
६. क्या तुम शाक नहीं खाते ? बैंगनका शाक मुझे अच्छा नहीं लगता, शाक मत परसो ।
७. क्या वनस्पति परसूँ, शुद्ध घी नहीं है ? वनस्पति घी परसो, शुद्ध घी मँहगा है, हम भी घीका सेवन नहीं करते ।
८. रोटी क्यों नहीं लेते ? थोड़ी-सी लो ? पेट भर गया है, आग्रह मत करो ।
९. तुमने भली भाँति भोजन नहीं किया ? वैसा नहीं । गले तक भोजन हो गया।
१०. क्या तुम हाथ धोनेके लिये जल चाहते हो ? हाँ, जल दो ।
११. क्या तुम पान खाते हो ? मैं पान नहीं खाता, मैं पान खानेवाला नहीं हूँ ।

कोषविस्तार :—

६ वङ्ग- बैंगनकी, पटोल- चिचिड़ाकी, आलुक- आलूकी, कर्कटी- ककड़ीकी, कारवेल्ल- करेलाकी

७. घृतकं वनस्पति घी, दधि दही, तक्र मही छाछ, दुग्धं दूध, आम्ररस अमरस, सारं पना

८. लड्डूकं लड्डू, श्रीखण्डम् श्रीखण्ड, पायसं खीर, कुण्डलिकां जलेबी, मोहन-भोगं हलआ, पूरिकां पूरी

# ७. मम गृहम्

१. क्व निवससि त्वम्, बाल ? अहं नागपुर-नगरे निवसामि ।
२. कुत्र विद्यते तव गृहम् ? भोसला-महाविद्यालयस्य निकटे ।
३, किं तत् भाटकितं गृहम् ? न हि न हि, न अहं भाटं ददामि ।
४. तर्हि कस्य तत् गृहम् ? तत् तु मम स्वकम् एव गृहम् ।
५. केन बद्धं तत् तव पित्रा पितामहेन वा ? मम पित्रा एव बद्धम् ।
६. कदा बद्धं तद् गृहम् ? पञ्चवर्षेभ्यः प्राक् ।
७. कां दिशाम् अभि मुखं तस्य ? पूर्वाभिमुखं मे गृहम् ।
८. कति भूमयः तव गृहस्य ? द्वि-भूमिकं मे गृहम् ।
९. कति कक्षाः विद्यन्ते ? सप्त कक्षाः **सभाजनकोष्ठः** च विद्यन्ते ।
१०. अपि सुप्रकाशितं संवातितं च ते गृहम् ? अथ किम्, विद्यन्ते बहूनि द्वाराणि **वातायनानि** च मे गृहस्य ।
११. अपि विद्युत्सन्धितं ते गृहम् ? आम्, विद्युत्सन्धितं मे गृहम् ।
१२. किं विद्यते कूपः नलः वा ? विद्यते कूपः तथा नलः च ।
१३. कियान् धनव्ययः अस्य रचने ? विंशति-सहस्र-मिताः रूपकाः ।

अनुवाद :–

## ७. मेरा घर

१. बालक ! तुम कहाँ रहते हो ? मैं नागपुर नगरमें रहता हूँ ।
२. तुम्हारा घर कहाँ है ? भोसला महाविद्यालयके पास ।
३ क्या वह किरायेका घर है ? नहीं, नहीं, मैं किराया नहीं देता ।
४. तब वह घर किसका है ? वह घर मेरा अपना ही है ।
५. उसे किसने बनवाया है, तुम्हारे पिताने या आजाने ? मेरे पिताने ही बनवाया है ।
६. वह घर कब बनवाया था ? पाँच वर्ष पूर्व ।
७. उसका मुख किस दिशाकी ओर है ? मेरे घरका मुख पूर्वकी ओर है ।
८. तुम्हारे घरमें कितनी मंजिले हैं ? मेरा घर दुमंजिला है ।
९. कितने कमरे हैं ? सात कमरे और एक बैठकखाना है ।
१०. क्या तुम्हारा घर सुप्रकाशित और हवादार है ? हाँ, मेरे घरमें बहुतसें दरवाजे और खिडकियाँ है ।
११. क्या तुम्हारे घरमें बिजली लगी है ? हाँ, मेरे घरमें बिजली लगी है ।
१२. क्या तुम्हारे घरमें, कुआँ अथवा नल है ? मेरे घरमें कुआँ और नल (दोनों) हैं ।
१३. उसके बनवानेमें कितना धन व्यय हुआ ? बीस हजार रुपये ।

**कोष-विस्तार :–**

| | | | | | | |
|---|---|---|---|---|---|---|
| १. नगरे | पुर्यां | पत्तने | नगर्यां | खेटे | ग्रामे |
| नगरमें | पुरीमें | नगरमें | नगरीमें | खेड़ेमें | ग्राममें |
| ९. सभाजनकोष्ठः | पाकगृहम् | स्नानगृहं | शौचकूपः | प्रघणः | वरंडः |
| बैठकखाना | रसोईघर | स्नानघर | संडास | 'पोर्च' | बरामदा |
| १०. वातायनानि | आवारः | अङ्गनं | गोष्ठः | पृष्ठवस्तु | अलिंदः |

# ८. मम गृहकर्म

| | |
|---|---|
| १. क्व गच्छसि बाल ? | अहम् हट्टं गच्छामि । |
| २. किमर्थं हट्टं गच्छसि ? | मात्रा शाकानि आनेतुम् आदिष्टः अस्मि । |
| ३. कानि शाकानि आनयसि ? | वल्लं, गोजिह्वां,कुस्तुम्बरु च आनयामि । |
| ४. किं न क्रीणासि **कुष्माण्डकम्** ? | ह्यः एव तस्य शाकं कृतम् । |
| ५. किं त्वम् एव प्रतिदिनं शाक-क्रयणं करोषि ? | आम् । अहम् एव करोमि । |
| ६. किं शाकं स्वस्तं सम्प्रति ? | **मेथिका** स्वस्ता, गोजिह्वा च महार्घा । |
| ७. कः भावः भिण्डि-शाकस्य ? | आणकत्रयं प्रतिसेरम् । आणक-द्वयेन अपि **विक्रीयते जरठ**-भिंडिः । |
| ८. किम् अन्यत् गृहकर्म करोषि त्वम् ? | अहं कूपात् जलोद्धरणं करोमि, पिष्ट-पेषणीं गच्छामि, शर्करादिकं च क्रीणामि । |
| ९. कः नियन्त्रणापणं गच्छति ? | अहम् एव **रविवासरे** गच्छामि । |
| १०. किं न गच्छति तव पिता ? | न भवति समयः मम पितुः कार्यालय- |
| ११. किं न विद्यते भृत्यः तव गृहे ? | न विद्यते भृत्यः मम गृहे । [ व्यापृतत्वात् |

अनुवाद :--

## ८ मेरा गृहकार्य

| | |
|---|---|
| १. बालक, तुम कहाँ जा रहे हो ? | मैं बाजार जा रहा हूँ । |
| २. किसलिये बाजार जा रहे हो ? | माँने मुझे शाक लानेको कहा है । |
| ३. कौन शाक लाओगे ? | सेम, गोभी और धनिया लाऊंगा । |
| ४. कुम्हड़ा क्यों नहीं खरीदते ? | कलही उसका शाक बनाया था । |
| ५. क्या तुम्हीं प्रतिदिन शाक खरीदते हो ? | हाँ, मैं ही खरीदता हूँ । |
| ६. आजकल कौनसा शाक सस्ता है ? | मेथी सस्ती है। गोभी महंगी है । |
| ७. भिण्डीका क्या भाव है ? | तीन आने सेर । कड़ी भिंडी दो आने बिकती है । |
| ८. तुम और कौनसा गृहकार्य करते हो ? | मैं कुएँसे जल निकालता हूँ, आटा पिसाने चक्की-पर जाता हूँ और शक्कर आदि खरीदता हूँ । |
| ९. कन्ट्रोलकी दुकानपर कौन जाता है ? | मैं ही रविवारको जाता हूँ । |
| १०. तुम्हारे पिता क्यों नहीं जाते ? | मेरे पिताजीको कार्यालयके कार्यसे अवकाश |
| ११. क्या तुम्हारे घरमें नौकर नहीं है ? | मेरे घरमें नौकर नहीं है । [ नहीं मिलता । |

कोष-विस्तार :--

| | | | | | | | |
|---|---|---|---|---|---|---|---|
| ३. | वल्लं | गोराणीं | बर्बटी | शिग्रुं | दीर्घशिबिकां | | |
| | सेम, | गवारफली | बर्बटी | मुनगा | बर्बटी | | |
| ४. | कुष्माण्डकं | मिष्टतुंबी | घोषातकीं | वंगं | भिदुर-वंगं | तुण्डिकेरी | कारवेल्लं |
| | कुम्हड़ा | लौकी | तोरई | भटा | टमाटर | कुंदरू | करेला |
| ६. | मेथिका | पालंकी | चक्रवर्तिनी | लोणी | बृहल्लोणी | दीर्घनालः | कुस्तुम्बरु |
| | मेथी | पालक | चाकवत | नेनुआ | चौलाई | घुइयाँके पत्ते | धनिया |
| ७. | विक्रीयते | क्रीयते | जरठ | कोमल | यातयाम | तैजस | |
| | बिकता है । | खरीदता है । | कड़ा | कोमल | बासा | ताजा | |
| ९. | रविवासरे | सोमवासरे, | मंगल-, | बुध-, | गुरु-, | शुक्र-, | शनि-, |

# ९. मम निद्रा

१. बाल, कदा त्वं निद्रासि ? अहं नव-वादन-समये निद्रामि ।
२. कः रचयति ते शय्याम् ? स्वयम् एव रचयामि मे शय्याम् ।
३. अपि ते विद्यते पर्यङ्कः ? आम् विद्यते मे **पर्यङ्कः** ।
४. कथं रचयसि शय्याम् ? प्रथमं तु पर्यङ्के आस्तरणं प्रसारयामि तस्य उपरि तल्पं, प्रच्छदम्, उपधानम्, ऊर्णायुं च यथाविधि स्थापयामि ।
५. अपि भवति मशक-पीडा ? नहि मे मशक-पीडा, मशकत्रं विद्यते ।
६. अपावृत-मुखः स्वपिषि किम् ? न अहं स्वपिमि अपावृत-मुखः ।
७. किं दृश्यते कदापि स्वप्नः ? न दृश्यते स्वप्नः । मे प्रगाढा निद्रा ।
८. ऊर्णायुना मुखं प्रच्छाद्य स्वपिषि किम् ? न अहं मुखं प्रच्छाद्य स्वपिमि ।
९. चित्रपटं द्रष्टुं जागरणं करोषि किम् ? न अहं जागरणं करोमि ।
१०. किमिति त्वं जागरणं न करोषि ? रात्रौ मा जागृहि इति मे जननी उपदिशति ।
११. अपि विद्यते आवश्यकता दीपस्य निद्रासमये ? न मे आवश्यकता [दीपस्य।
१२. कः शय्यावगुण्ठनं करोति ? अहम् एव तत् करोमि ।

अनुवाद :—

## ९. मेरी निद्रा

१. बालक, तुम कब सोते हो ? मैं नौ बजे सोता हूँ ।
२. तुम्हारा बिस्तर कौन बिछाता है ? मैं स्वयं ही बिछाता हूँ ।
३. क्या तुम्हारे पास पलंग है ? हाँ, मेरे पास पलँग है ।
४. शय्या किस प्रकार बिछाते हो ? पहले तो पलंगपर दरी बिछाता हूँ । उसके ऊपर गद्दा, चादर तकिया और कम्बल यथास्थान रखता हूँ ।
५. क्या तुम्हें मच्छरोंसे कष्ट होता है ? मच्छरोंसे कष्ट नहीं होता, मसहरी है ।
६. क्या तुम खुले मुँह सोते हो ? नहीं, मैं खुले मुंह नहीं सोता ।
७. क्या तुम्हें कभी स्वप्न दिखलाई देता है ? मुझे स्वप्न नहीं दिखते, मेरी नींद गहरी है।
८. क्या तुम कम्बल ओढ़कर सोते हो ? नहीं, मैं मुँह नहीं ढँकता ।
९. क्या चित्रपट देखनेके लिये जागते हो ? मैं जागरण नहीं करता । [देती हैं।
१०. तुम जागरण क्यों नहीं करते ? रात्रिमें मत जागो– ऐसा मेरी माँ उपदेश
११. सोते समय, क्या दीपककी आवश्यकता होती है ? मुझे दीपककी आवश्यकता
१२. बिस्तर कौन लपेटता है ? मैं ही लपेटता हूँ । [नहीं होती ।

**कोष-विस्तार** :—३. पर्यङ्कः, खट्वा, ४. ऊर्णायुः, कम्बलः, नीशारः

# १०. मम गृहवाटिका

१. के के **वृक्षाः** विद्यन्ते तव **वाटिकायाम्** ? — केचन फलवृक्षाः केचन पुष्पवृक्षाः विद्यन्ते मम वाटिकायाम् ।
२. के पुष्पवृक्षाः सन्ति तत्र ? — चम्पकः, **बकुलः**, कणेरः, पारिजातकः च ।
३. कः अवचिनोति पुष्पाणि ? — मम कनीयसी भगिनी अवचिनोति पुष्पाणि ।
४. कः सिञ्चति जलम् ? — अहं सिञ्चामि जलं, विद्यते **सेक्त्रम्** ।
५. किम् अन्यत् **कर्म** करोषि त्वम् ? — **आलवालं** करोमि, तृणं च निष्कासयामि ।
६ कदा त्वं लभसे समयम् ? — रविवासरे प्रातः ।
७. कथं रमते ते मनः ? — पुष्प-परिमलः प्रसरति, तेन रमते मे मनः ।
८. के फलवृक्षाः तत्र रोहन्ति ? — **आम्रः**, जम्बूः, निम्बुः, नारंगः, पेरुकः, दाडिमः च ।
९. किं विद्यन्ते शाक-वृक्षाः तत्र ? — प्रावृट्काले बहवः शाकाः प्ररोहन्ति ।
१०. किं न आगच्छन्ति तत्र **पशवः** ? — **वार्क्ष्यं** विद्यते, न आगच्छन्ति पशवः ।
११. के **पक्षिणः** आगच्छन्ति ? — शुकाः, कोकिलाः, चटकाः च ।

अनुवाद :—

## १०. मेरी गृहवाटिका

१. तुम्हारे बगीचेमें कौन-कौनसे वृक्ष हैं ? — मेरे बगीचेमें कुछ फलके वृक्ष और कुछ पुष्पके वृक्ष हैं ।
२. वहाँ पुष्पके वृक्ष कौनसे हैं ? — चम्पा, मौलश्री, कनेर और पारिजात ।
३. पुष्प कौन चुनता है ? — मेरी छोटी बहिन पुष्प चुनती है ।
४. जल कौन सींचता है ? — मैं जल सींचता हूँ, हजारा है ।
५. तुम और कौनसा काम करते हो ? — थाला बनाता हूँ, और घास निकालता हूँ ।
६. तुम समय कब पाते हो ? — रविवारको प्रातःकाल ।
७. तुम्हारा मन कैसे प्रसन्न होता है ? — पुष्पकी सुगन्ध फैलती है, उससे मेरा मन लगता ? प्रसन्न होता है ।
८. कौनसे फलके वृक्ष वहाँ लगे हैं ? — आम, जामुन, नीबू, नारंगी, बिही और अनार ।
९. वहाँ शाक वृक्ष है क्या ? — बरसातमें बहुत-सी शाक उगती है ।
१०. वहाँ पशु क्यों नहीं आते ? — पेड़ोंका कूप होनेके कारण वहाँ जानवर नहीं आते ।
११. कौनसे पक्षी आते हैं ? — तोते, कोयल और गौरैया ।

कोष-विस्तार :—

१. उद्याने — उद्यानमें, वृक्षाः — वृक्ष, लताः — लता, वेलयः — बेल, गुल्माः — गुच्छे

२. मुद्गरः — बेला, मालती — मालती, जातिः — जाही, कुन्दः — कुन्द, यूथिका — जुही, पाटलः — गुलाब, सेवन्तिका — सेवन्ती, कुरंटकः — कटैया, जपा — जासौन, तगरः — चांदनी, झण्डुः — गेंदा, नक्तमालः — रातरानी, चम्बेली — चमेली

४. सेक्त्रं — हजारा

५. कर्म — काम

५. आलवालं — थाला, तृणं — तिनका

७. पुष्पपरिमलः — पुष्पोंकी सुगन्ध, मनः — मन

८. पनसः — टहलक, बदरी — बेर

८. आमलकः — आँवला, चिंचा — इमली, कपित्थः — कबीठ, शीतफलः — सीताफल, कदली — केला, अंजीरः — अंजीर, द्राक्षा — अंगूर

१०. पशवः — पशु, गावः — गायें, वृषभाः — बैल, अजाः — बकरियाँ, गर्दभाः — गधे, अश्वाः — घोड़े, महिष्यः — भैंसें, श्वानाः — कुत्ते

११. पक्षिणः मयूरः कुक्कुटः काकः चिल्लः गृध्रः उलूकः सारिका

# उपयुक्त-शब्द-कोष :

( वि. = विशेषण, स. = सर्वनाम, अ. = अव्यय, भू. = भूतकालवाचक, क. = कर्मणि, भ. = भविष्यकाल, प्र. = प्रेरणार्थक, स्त्री = स्त्रीलिंग )

## १. प्रारम्भिकः पाठः ।

| | |
|---|---|
| १. बालः, वत्सः | लड़का |
| बाला, वत्सा | लड़की |
| १०. मा (गच्छ) | मत (जा) |
| १३. पुस्तकं | पुस्तक |
| १४. वृक्षः | वृक्ष |
| १५. फलं | फल |
| १६. पुष्पं | फूल |
| १७. वाक्यं | वाक्य |
| १८. पाठः | पाठ |
| १९. पत्रं | पत्र |
| २०. लेखनी | लेखनी |
| २१. ध्वनिः | आवाज, ध्वनि |
| २२. प्रश्नः | प्रश्न |
| २३. उत्तरं | उत्तर |
| २४. जलं | पानी, जल |
| २५. गुरुः | गुरुजी |
| २९. तालिका | ताली |
| ३०. वस्त्रं | वस्त्र |
| ३२. कन्दुकः | गेंद |
| ३५. बहिः (अ.) | बाहर |

## २. मम परिचय : ।

| | |
|---|---|
| १. किम् ? | क्या |
| इति | ऐसा |
| नाम (न्) | नाम |
| २. तव, ते | तेरा-री |
| मम, मे | मेरा-री |
| पिता (तृ) | पिता |
| माता (तृ) | माँ |
| भ्राता (तृ) | भाई |
| जामाता (तृ) | दामाद |
| नप्ता (तृ) | नाती |
| दुहिता (तृ) | पुत्री, लड़की |

| | |
|---|---|
| स्वसा (सृ) | बहिन |
| भगिनी | बहिन |
| नप्त्री | नातिन |
| पुत्रः सुतः | पुत्र, लड़का |
| पुत्री, सुता | पुत्री, लड़की |
| पितृव्यः | काका, चाचा |
| मातुलः | मामा |
| मातुलानी | मामी |
| मातुलेयः | ममेरा भाई |
| भ्रातृव्यः | चचेरा भाई |
| श्यालः, -कः | साला |
| भागिनेयः | भांजा |
| स्नुषा | बहू |
| श्वश्रूः | सास |
| श्वशुरः | ससुर |
| पतिः, भर्ता (तृ) | पति |
| पत्नी, भार्या | स्त्री पत्नी |
| भ्रातृ-जाया | भाभी |
| पितामहः | आजा |
| मातामहः | नाना |
| अग्रजः | बड़ा भाई |
| अनुजः | छोटा भाई |
| अग्रजा | बड़ी बहिन, दीदी |
| अनुजा | छोटी बहिन |
| एक वि. | एक |
| द्वि ,, | दो |
| त्रि ,, | तीन |
| चतुर् ,, | चार |
| पञ्चन् ,, | पाँच |
| षष् ,, | छः |
| सप्तन् ,, | सात |
| अष्टन् ,, | आठ |
| नवन् ,, | नौ, नव |
| दशन् ,, | दस |

| | |
|---|---|
| एकादशन् (वि) | ग्यारह |
| द्वादशन् ,, | बारह |
| त्रयोदशन् ,, | तेरह |
| चतुर्दशन् ,, | चौदह |
| पञ्चदशन् ,, | पंद्रह |
| षोडशन् ,, | सोलह |
| सप्तदशन् ,, | सत्रह |
| अष्टादशन् ,, | अठारह |
| नवदशन् ,, | उन्नीस |
| एकोनविंशतिः | उन्नीस |
| विंशतिः | बीस |
| एकविंशतिः | इक्कईस |
| द्वाविंशतिः | बाईस |
| त्रयोविंशतिः | तेईस |
| चतुर्विंशतिः | चौवीस |
| पञ्चविंशतिः | पच्चीस |
| वयः (स.) | उम्र |
| कति (स.) | कितना-नी |
| ज्येष्ठ (वि.) | सबसे बडा |
| व्यवसायः | धन्धा |
| कनिष्ठ (वि.) | सबसे छोटा |
| शिक्षकः | शिक्षक |
| अध्यापकः | अध्यापक |
| प्राध्यापकः | प्रोफेसर |
| प्राचार्यः | प्रिन्सिपल |
| न्यायाधीशः | न्यायाधीश |
| विधिवक्ता (तृ) | बॅरिस्टर |
| अधिवक्ता ,, | ॲडव्होकेट |
| वाकीलः | वकील |
| वैद्यः | वैद्य |
| अभियांत्रिकः | इंजीनियर |
| भिषक् (ज्) | डॉक्टर |
| पुराणिकः | पुराणिक |
| मुद्रकः | मुद्रक |
| सम्पादकः | संपादक |
| व्यवस्थापकः | व्यवस्थापक |

कर्मचारी(इन्) नौकर
अधिकारी ,, अफसर
व्यापारी ,, व्यापारी
वणिक् ,, व्यापारी
कृषीवलः किसान
मध्यगः, दलालः दलाल
सुवर्णकारः सुनार
लोहकारः लुहार
चित्रकारः चित्रकार
पटकारः कोष्टी,जुलाहा
सूत्रधारः बढ़ई
शिल्पकारः कारीगर
कर्मकरः मजदूर
धात्री दाइ
नापितः नाइ
कुम्भकारः कुम्हार
चर्मकारः चमार
रजकः, वरठः धोबी
आपणिकः दुकानदार
सूचिकः दरजी

## ३. प्रातःकर्म।

१. कदा ? कब
[त्वम् (स.)] तू
[अहम् (स.)] मैं
प्रातः (अ.) सुबह
प्र+बुध् [प्रबुध्यते] उठना
२. ततः (अ.) तब, बाद
३. दन्तधावनं दाँत मलना
उपयुज्[उपयुङ्क्ते]उपयोग करना
अपि ? क्या ?
दन्तमञ्जनं दन्त मंजन
रद-फेनः टूथपेस्ट
शीत (वि.) ठंडा
स्नानं स्नान
४. उष्ण (वि.) गरम
कवोष्ण ,, कुनकुना
कौप ,, कुएका
५. बाध् [बाधते] बाधना
न, नो (अ.) नहीं
६. स्वफेनः साबून
भूरिफना सिकेकाइ
ओम् (अ.) हाँ
७. तैल तेल
८. व्यायामः व्यायाम
प्रत्यहं (अ.) प्रतिदिन
सायं ,, संध्या समय
९. चायपानं चाय पीना
बिन्दुपेयं कॉफी
चायः चाय
दुग्धं दूध
पानकं शरबत
१०. आ+रभ् आरंभ क०
(आरभते) शुरू करना
अध्ययनं अभ्यास
सप्तवादनतः(अ.) सात बजेसे
१२. विद्यालयः-यं पाठशाला
उपयोगः उपयोग

## ४. मम विद्यालयः।

२. किम् (स.) कौन-सा,सी
३. वर्गः वर्ग, कक्षा
४. महाभागः साहिब, महोदय
६. पठ [पाठयति (प्र.)] पढ़ाना
७. खिस्ताब्दः ईसवी सन
परीक्षा परीक्षा
८. उत्तीर्ण (वि.) पास
किन्तु, तु, परन्तु (अ.) परन्तु
९. तद् (स) वह
अथ किम् हाँ
१०. विषयः विषय
निपतित (भू.) नापास
गुणानुक्रमः नंबर
प्रारम्भः आरंभ
छुट्टिः छुट्टी

## ५. मम भोजन-वेला।

१. जात (भू.) हुआ, हुई
२. वेला,समयः समय
३. पाकः स्वयंपाक, रसोई
४. परि+विष्(प्र.) परोसना
[परिवेषयति] (अन्न)
अन्नं अन्न
५. पदार्थः पदार्थ, व[illegible]
अस् [अस्ति] होना
शाकः, -कं, भाजी सब्जी
व्यञ्जनं चटनी इ० पदार्थ
प्रायः (अ.) प्रायः
भू [भवति] होना
च (अ.) और
६. तिक्तप्रिय चिरमिरा खानेवाला
मधुरप्रिय मधुरप्रिय
वा, अथवा, अथवा, या
पक्वान्नं पका हुआ अन्न
रुच् [रोचते] प्रिय होना
तथा (अ.) तथा
७. संधितं अचार
निम्बूकः नीबू
निम्बूः (स्त्री.) नीबू
८. मूलकः,-कं मूला
नैव (न एव) (अ.) बिलकुल [नहीं
९. बुभुक्षित (अ.) भूखा
भृशम् (अ.) जलद, बहुत
१०. प्रति+ईक्ष् राह देखना, बाट [जोहना
तातपादाः पिताजी
गोष्ठीगृहं क्लब
सद्यः (अ.) इतनेमें
आ+गम् [आगमिष्यति] [आवेगा
११. सिद्ध तयार
सामयिक पंक्चुअल

## ६. मम भोजनम् ।

१. बुभुक्षा, क्षुधा — भूख
विद् [विद्यते] — रहना, होना
महती (वि.) — बड़ी
२. पात्रं — पात्र, पत्तल, थाली
सत्वरं, तूर्णम् — शीघ्र
३. वाञ्छ् [वाञ्छति] — चाहना
४. तिक्त (वि.) — चिरपिरा
लवण (वि.) — खारा
अम्ल (वि.) — खट्टा
मधुर (वि.) — मीठा
रुचिकर, स्वादु, मिष्ट — रुचकर
आलवण — कुछखारा
अलवण — अलोनी
७. महार्घ (वि.) — महंगा
स्वस्त (वि.) — सस्ता
सेव् [सेवते] — सेवन करना
८. ग्रह् [गृह्णाति] — लेना
[गृहाण] — [ले]
ईषत् (अ.) — अल्प, थोड़ा
९. उदरं — पेट
पूर्ण (भू.) — भरा हुआ
आग्रहः — आग्रह
सम्यक् (अ.) — अच्छा
आकण्ठं (अ.) — गलेतक
कृत (भू.) — किया हुआ, कृत
१०. हस्त-प्रक्षालनं — हाथ धोना
मुख-प्रक्षालनं — मुँह धोना
दा [ददाति] — देना
[देहि] — दे
११. ताम्बूलः — बीड़ा, पान

## ७. मम गृहम् ।

क्व, कुत्र (अ.) — कहाँ
नि+वस् [वसति] — रहना
२. गृहं, घरं, गेहं — घर
भवनं — बंगला
हर्म्यं — बाड़ा
निकटे — नजदीक
३. भाटकित — किरायेका
भाटं — किराया
४. तर्हि (अ.) — तब
स्व (स.) — निजी
५. बद्ध (भू.) — बँधा हुआ
६. प्राक् (अ) — पहिले
७. दिशा — दिशा
अभि (अ.) — ओर
मुखं — मुँह
पूर्वाभिमुखं — जिसका मुँह पूर्वकी ओर हो
८. भूमिः — मंजिल
द्विभूमिक — दुमजला
९. कक्षा — कक्षा
१०. सुप्रकाशित — सुप्रकाशित
संवातित — हवादार
बहु (वि.) — बहुत
द्वारं — द्वार
वातायनं — खिड़की

## ८. मम गृहकर्म ।

१. हट्टः — बाजार
आपणः — दुकान
२. किमर्थम् ? (अ.) — किसलिअे
आदिष्ट (भू.) — आज्ञापित
३. वल्लः — सेमी
गोजिह्वा — गोभी
कुस्तुम्बरु (न.) — धनिया
दीर्घनालः — चमकोरा
शिग्रुः — मुनगा
४. क्री [क्रीणाति] — खरीदना
वि+क्री [विक्रीणाति] — बेचना
प्रतिदिनं (अ.) — प्रतिदिन
५. क्रयणं, क्रयः — खरीदी
विक्रयः — बिक्री
सम्प्रति — फिलहाल
७ प्रतिसेरं (अ-) — प्रतिसेर
[विक्रीयते (क.)] — बेचाजाना
जरठ (वि.) — कड़ा
कोमल (वि.) — कोमल
पिष्ट-पेषणी — आटेकी चक्की
शर्करा — शक्कर (चीनी)
गुडः — गुड़
खण्ड-शर्करा — मिश्री

## ९. मम निद्रा ।

१. निद्रा [निद्राति] — सोना
रच् [रचयति] — तैयार करना
शय्या — बिस्तरा
स्वयम् (अ.) — स्वतः
प्र+सृ [प्रसारयति (प्र.)] — फैलाना
तल्पः, तल्पं — गद्दी
प्रच्छदः — चादर
उपधानं — तकिया
ऊर्णायुः — कम्बल
स्था [स्थापयति(प्र.)] — रखना
अपावृत (भू.) — खुला हुआ
स्वप्नः — स्वप्न
स्वापः, निद्रा — निद्रा, नींद
किमिति ? — क्यों
दीपः — दिया
अवगुण्ठनं — लपेटना

## १०. मम गृहवाटिका ।

१. आरामः, उपवनम् — बगीचा
वृक्षः, तरुः — झाड़
लता, वल्लिः — लता, बेल
४. सिच् [सिञ्चति] — सींचना
५. आलवालं — थाला
निस्+कस् [निष्कासयति (प्र.)] — निकालना, उखाड़ना
तृणं — घास, तृण
६. लभ् [लभते] — प्राप्त होना, मिलना
७. रम् [रमते] — रमना
८. रुह् [रोहति] — उगना
९. प्रावृट्कालः — बरसात
हिमकालः — ठंडके दिन
१०. कंटिल-तारः — कटीला तार

संस्कृत–भाषा–प्रचारि–सभायाः

# मौखिक–संस्कृत–परीक्षाः

संस्कृत-भाषाप्रचारि-सभायाः निम्न-लिखित-मौखिक-परीक्षाः प्रतिवर्षं भविष्यन्ति। एताः सर्वाः परीक्षाः मौखिक्यः एव वर्तन्ते। परीक्षाः प्रतिवर्षं द्विवारं खिरस्ताब्दस्य प्रथमे मासि अष्टमे मासि च (एवं हेमन्तर्तौ वर्षर्तौ च) भविष्यन्ति। द्वयोःपरीक्षयोः मध्ये भवेत् षण्मासानाम् अन्तरम्। नागपुर-स्थाः नागपुरात् बहिःस्थाः च परीक्षार्थिनः बाल-बालिकाः परीक्षार्हाः भवेयुः। परीक्षा-शुल्कं प्रतिछात्रं चतुराणकं केवलम्। यदि दशसंख्याधिकाः परीक्षार्थिनः आवेदन-पत्रं सर्वकार-मान्य-विद्यालयस्य मुख्याध्यापकद्वारा प्रेषयिष्यन्ति तर्हि परीक्षा-केन्द्रस्य आयोजनं मुख्याध्यापक–महाभागस्य सहकार्येण कर्तुं शक्यते। आवेदन–पत्राणि परीक्षाशुल्केन सह परीक्षा–मासस्य मासपूर्वं प्रेषणीयानि। आवेदन-पत्रे परीक्षार्थिनः नाम, पितुः नाम, कुल-नाम, वयः, पाठशालां, निवास-स्थानं, केन्द्र नाम च लिखन्तु। परीक्षोत्तीर्णच्छात्रेभ्यः प्रमाण-पत्राणि प्रदीयन्ते यथासमयम्। श्रेणिगुणानां प्रतिशतता अधोलिखिता भवेत्—

| | |
|---|---|
| प्रथम–श्रेणिः | ८०–१०० |
| द्वितीय–श्रेणिः | ६०–७९ |
| तृतीय–श्रेणिः | ४०–५९ |
| प्रावीण्यम् | ९०–१०० |

एतासां परीक्षाणां नामानि अभ्यासक्रमः पुस्तक-नामानि च अधः लिख्यन्ते। अभ्यास-क्रमान्तर्गतानां द्वादश-पाठ्य-पुस्तकानां मूल्यम् आणक-द्वयं प्रत्येकम्।

**प्रथम–परीक्षा–**

१. बालामृत-शतश्लोकी*
२. सुलभ-शब्द-रूपावलिः*
३. व्यवहार-प्रश्नोत्तरी*

**द्वितीय–परीक्षा–**

४. उपयुक्त-धातुरूपावलिः*
५. हितोपदेश-कथाः*
६. संक्षिप्तामरकोशः*
प्रथम-परीक्षायाः अभ्यासक्रमः च।

**तृतीय–परीक्षा–**

७. छात्रामृत-शतश्लोकी*
८. रामायण-कथा*
९. व्यवहार-सूक्तावलिः
द्वितीय-परीक्षायाः अभ्यासक्रमः च।

**संस्कृत-प्रवेश–परीक्षा–**

१०. महाभारत-कथाः
११. नाट्य-प्रवेशः
१२. कौमुदी-प्रवेशः
तृतीय-परीक्षायाः अभ्यासक्रमः च।

*मुद्रिताः
**धर्मपीठम्,**
**नागपुरम् १**

**स. ना. कुलकर्णी**
सं. भा. प्र. सभायाः
प्रमुख-कार्यवाहः



इयं पुस्तिका वर्धानगरस्थ-राष्ट्रभाषा-प्रचार-समितेः मुद्रणालये मुद्रिता नागपुरस्थ-संस्कृतभाषाप्रचारि-सभाद्वारा प्रमुख-कार्यवाहेन धर्मपीठे कुलकर्णी-भवने प्रकाशतां च नीता।

संस्कृत-भाषा-प्रचार-वाङ्मयमाला

# उपयुक्त-धातु-रूपावलिः

( बालानां कृते )

श्रीमताम्
लाहिड़ी--कुलावतंसानां
बिभूतिभूषण-महोदयानां
दानानुग्रहफलम्
इदम् ।



संकलयिता—स. ना. कुलकर्णी



द्वितीयं संस्करणम् ।





चतुर्थं पुष्पम् ] १९५५ [ मूल्यम् आणक-द्वयम्

# हृद्गतम्

वैयाकरणैः सव्ययशब्दानां सुप्-तिङादि-प्रत्ययानुरोधेन सुबन्तशब्दाः तिङन्तशब्दाः च इति द्वौ विभागौ कृतौ । सुप्-प्रत्ययाः नाम-सर्वनाम-विशेषण-शब्दानां परतः भवन्ति तिङ्-प्रत्ययाः धातूनां परतः भवन्ति । धातूनां प्रथम-गणात् आरभ्य दशमगणं यावत् दश गणाः भवन्ति । एतेषु दशगणेषु प्रथम-चतुर्थ-षष्ठ-दशम-गणानां तिङन्तप्रत्यय-पूर्वं-पदम् अदन्तं भवति, इतरेषां द्वितीय-तृतीय-पञ्चम-सप्तम-अष्टम-नवम-गणानां तिङन्त-प्रत्ययपूर्वं पदम् अनदन्तं भवति । धातूनां गण-निदर्शनं कर्तुं विद्यते किञ्चित् चिह्नम् । तत् तु विकरणम् इति अभिधीयते । यथा 'अ' इति प्रथम-गणे, 'य' इति चतुर्थ-गणे, 'अय' इति दशम-गणे विकरणे सति तथा च तिङन्त-प्रत्यये सति गुण-वृद्धि-आगम-आदेशादि-विकाराः अपि धातूनां भवन्ति । कालार्थादि-भेदानां स्पष्टतया प्रदर्शनार्थं संस्कृत-भाषायां दश लकाराः प्रयुज्यन्ते एतेषां दश-लकाराणाम् अस्यां पुस्तिकायां केवलं पञ्च लकाराः समाविष्टाः । लट् (वर्तमाने) लङ् (अनद्यतन-भूते), लोट् (आज्ञायाम्), लिङ् (विधौ), लृट् (भविष्यति) इति पञ्च लकाराः । केचन धातवः परस्मैपदिनः, आत्मनेपदिनः, उभयपदिनः वा भवन्ति धातूनां तिङन्त-प्रत्ययपरं रूपं क्रियापद-रूपम् । तत् तु पुरुष-वचन-कालार्थानाम् अनुरोधेन न तु लिङ्गानुरोधेन, परिवर्तते । प्रथम-पुरुषः, मध्यम-पुरुषः, उत्तम-पुरुषः इति त्रयः पुरुषाः एक-वचनं, द्वि-वचनं, बहु-वचनम् इति त्रीणि वचनानि । वर्तमानकालः, भूतकालः, भविष्यत्कालः च इति त्रयः कालाः । आज्ञार्थः विध्यर्थः च इति द्वौ अर्थौ ।

इयं पुस्तिका न सम्पूर्णं धातुरूप-जातम् आख्याति । सम्पूर्णत्वं स्वयंपूर्णत्वं वा न विद्यते अस्माकं ध्येयम् । बालानां सुख-बोधाय रचिता इयं पुतिका क्लिष्टानां धातूनां धातुरूपाणां च परिवर्जनं करोति । यदि केचन समाविष्टाः सन्ति ते केवलं परिचयार्थं, न तु कण्ठस्थीकरणार्थम् । अनदन्त-विकरण-धातूनां कृते कृञ्धातुं विहाय आत्मनेपदं न प्रोक्तम् । अदन्त-विकरणात्मक-धातूनां विषये तु परस्मैपदस्य आत्मनेपदस्य च रूपाणां समावेशः कृतः । प्रत्येकस्य गणस्य केचन नित्योपयोगिनः नायकधातवः प्रथमतः लिखिताः, तत्पश्चात् कर्मणि-रूपाणां प्रयोजक-रूपाणां च परिचयार्थं कानिचित् रूपाणि लिखितानि । अनन्तरम् आगच्छति उपयुक्त-धातुकोशः, यत्र दश-गणानां धातूनां सूचिः क्रमशः अकारादिक्रमेण प्रतिगणं रचिता ।

कृदन्तानां परिचयः मातृभाषायाः शब्दसमृद्धेः कृते तथा च धातूनाम् अर्थबोधस्य कृते भृशम् उपकारकः भवति इति ज्ञात्वा कतिपयेषां परिचित-शब्दानां सूचिः समाविष्टा । निष्ठा-प्रत्ययान्त-शब्दानां प्रचुरः उपयोगः संस्कृत-वाङ्मये व्यवहारे च विद्यते । एवं हि क्त्वा-प्रत्ययान्ताः तुमुन्-प्रत्ययान्ताः ल्यप्-प्रत्ययान्ताः च शब्दाः सर्वदा प्रयुज्यन्ते । एतेषां परिचयः आवश्यकः । तेषां रूपाणां अभिज्ञानम् अपरिहार्यम् एव मतम् ।

मन्ये इयं पुस्तिका संस्कृत-भाषायाः नव-पाठकानां कृते तथा च विद्यालयीन-संस्कृत-विषयस्य छात्राणां कृते उपयुक्ता भवेत् ।

धर्मपीठम्, नागपुरम् १
फाल्गुन-पूर्णिमा, शके १८७४
दिनांक— २८-२-५३

स. ना. कुलकर्णी
प्रमुख-कार्यवाहः
संस्कृत-भाषा-प्रचारिणी सभा

## प्रथम—गणः

१. भू (होना-होणें) परस्मैपदम् लट् (वर्तमाने) २. वृत् (रहना-असणें) आत्मनेपदम्

| | | | | | |
|---|---|---|---|---|---|
| १. भवामि | भवावः | भवामः | १. वर्ते | वर्तावहे | वर्तामहे |
| २. भवसि | भवथः | भवथ | २. वर्तसे | वर्तेथे | वर्तध्वे |
| ३. भवति | भवतः | भवन्ति | ३. वर्तते | वर्तेते | वर्तन्ते |

लङ् ( भूते )

| | | | | | |
|---|---|---|---|---|---|
| १. अभवम् | अभवाव | अभवाम | १. अवर्ते | अवर्तावहि | अवर्तामहि |
| २. अभवः | अभवतम् | अभवत | २. अवर्तथाः | अवर्तेथाम् | अवर्तध्वम् |
| ३. अभवत् | अभवताम् | अभवन् | ३. अवर्तत | अवर्तेताम् | अवर्तन्त |

लोट् ( आज्ञायाम् )

| | | | | | |
|---|---|---|---|---|---|
| १. भवानि | भवाव | भवाम | १. वर्तै | वर्तावहै | वर्तामहै |
| २. भव | भवतम् | भवत | २. वर्तस्व | वर्तेथाम् | वर्तध्वम् |
| ३. भवतु | भवताम् | भवन्तु | ३. वर्तताम् | वर्तेताम् | वर्तन्ताम् |

( लिङ् विधौ )

| | | | | | |
|---|---|---|---|---|---|
| १. भवेयम् | भवेव | भवेम | १. वर्तेय | वर्तेवहि | वर्तेमहि |
| २. भवेः | भवेतम् | भवेत | २. वर्तेथाः | वर्तेयाथाम् | वर्तेध्वम् |
| ३. भवेत् | भवेताम् | भवेयुः | ३. वर्तेत | वर्तेयाताम् | वर्तेरन् |

## चतुर्थ—गणः

३. नृत् (नाचना-नाचणें) परस्मै. वर्तमाने ४. मन् (मानना-मानणें) आत्मने.

| | | | | | |
|---|---|---|---|---|---|
| १. नृत्यामि | नृत्यावः | नृत्यामः | १. मन्ये | मन्यावहे | मन्यामहे |
| २. नृत्यसि | नृत्यथः | नृत्यथ | २. मन्यसे | मन्येथे | मन्यध्वे |
| ३. नृत्यति | नृत्यतः | नृत्यन्ति | ३. मन्यते | मन्येते | मन्यन्ते |

भूते

| | | | | | |
|---|---|---|---|---|---|
| १. अनृत्यम् | अनृत्याव | अनृत्याम | १. अमन्ये | अमन्यावहि | अमन्यामहि |
| २. अनृत्यः | अनृत्यतम् | अनृत्यत | २. अमन्यथाः | अमन्येथाम् | अमन्यध्वम् |
| ३. अनृत्यत् | अनृत्यताम् | अनृत्यन् | ३. अमन्यत | अमन्येताम् | अमन्यन्त |

आज्ञायाम्

| | | | | | |
|---|---|---|---|---|---|
| १. नृत्यानि | नृत्याव | नृत्याम | १. मन्यै | मन्यावहै | मन्यामहै |
| २. नृत्य | नृत्यतम् | नृत्यत | २. मन्यस्व | मन्येथाम् | मन्यध्वम् |
| ३. नृत्यतु | नृत्यताम् | नृत्यन्तु | ३. मन्यताम् | मन्येताम् | मन्यन्ताम् |

विधौ

| | | | | | |
|---|---|---|---|---|---|
| १. नृत्येयम् | नृत्येव | नृत्येम | १. मन्येय | मन्येवहि | मन्येमहि |
| २. नृत्येः | नृत्येतम् | नृत्येत | २. मन्येथाः | मन्येयाथाम् | मन्येध्वम् |
| ३. नृत्येत् | नृत्येताम् | नृत्येयुः | ३. मन्येत | मन्येयाताम् | मन्येरन् |

## षष्ठ–गणः

५. विश् (प्रवेश करना–प्रवेश करणें) परस्मै-वर्तमाने ६. लस्ज् (लजाना–लाजणें) आत्मने

| | | | | | |
|---|---|---|---|---|---|
| १. विशामि | विशावः | विशामः | १. लज्जे | लज्जावहे | लज्जामहे |
| २. विशसि | विशथः | विशथ | २. लज्जसे | लज्जेथे | लज्जध्वे |
| ३. विशति | विशतः | विशन्ति | ३. लज्जते | लज्जेते | लज्जन्ते |

### भूते

| | | | | | |
|---|---|---|---|---|---|
| १. अविशम् | अविशाव | अविशाम | १. अलज्जे | अलज्जावहि | अलज्जामहि |
| २. अविशः | अविशतम् | अविशत | २. अलज्जथाः | अलज्जेथाम् | अलज्जध्वम् |
| ३. अविशत् | अविशताम् | अविशन् | ३. अलज्जत | अलज्जेताम् | अलज्जन्त |

### आज्ञायाम्

| | | | | | |
|---|---|---|---|---|---|
| १. विशानि | विशाव | विशाम | १. लज्जै | लज्जावहै | लज्जामहै |
| २. विश | विशतम् | विशत | २. लज्जस्व | लज्जेथाम् | लज्जध्वम् |
| ३. विशतु | विशताम् | विशन्तु | ३. लज्जताम् | लज्जेताम् | लज्जन्ताम् |

### विधौ

| | | | | | |
|---|---|---|---|---|---|
| १. विशेयम् | विशेव | विशेम | १. लज्जेय | लज्जेवहि | लज्जेमहि |
| २. विशेः | विशेतम् | विशेत | २. लज्जेथाः | लज्जेयाथाम् | लज्जेध्वम् |
| ३. विशेत् | विशेताम् | विशेयुः | ३. लज्जेत | लज्जेयाताम् | लज्जेरन् |

## दशम–गणः

७. चुर् ( चुराना–चोरणें ) परस्मै वर्तमाने ८. चुर् ( चुराना–चोरणें ) आत्मने.

| | | | | | |
|---|---|---|---|---|---|
| १. चोरयामि | चोरयावः | चोरयामः | १. चोरये | चोरयावहे | चोरयामहे |
| २. चोरयसि | चोरयथः | चोरयथ | २. चोरयसे | चोरयेथे | चोरयध्वे |
| ३. चोरयति | चोरयतः | चोरयन्ति | ३. चोरयते | चोरयेते | चोरयन्ते |

### भूते

| | | | | | |
|---|---|---|---|---|---|
| १. अचोरयम् | अचोरयाव | अचोरयाम | १. अचोरये | अचोरयावहि | अचोरयामहि |
| २. अचोरयः | अचोरयतम् | अचोरयत | २. अचोरयथाः | अचोरयेथाम् | अचोरयध्वम् |
| ३. अचोरयत् | अचोरयताम् | अचोरयन् | ३. अचोरयत | अचोरयेताम् | अचोरयन्त |

### आज्ञायाम्

| | | | | | |
|---|---|---|---|---|---|
| १. चोरयाणि | चोरयाव | चोरयाम | १. चोरयै | चोरयावहै | चोरयामहै |
| २. चोरय | चोरयतम् | चोरयत | २. चोरयस्व | चोरयेथाम् | चोरयध्वम् |
| ३. चोरयतु | चोरयताम् | चोरयन्तु | ३. चोरयताम् | चोरयेताम् | चोरयन्ताम् |

### विधौ

| | | | | | |
|---|---|---|---|---|---|
| १. चोरयेयम् | चोरयेव | चोरयेम | १. चोरयेय | चोरयेवहि | चोरयेमहि |
| २. चोरयेः | चोरयेतम् | चोरयेत | २. चोरयेथाः | चोरयेयाथाम् | चोरयेध्वम् |
| ३. चोरयेत् | चोरयेताम् | चोरयेयुः | ३. चोरयत | चोरयेयाताम् | चोरयेरन् |

## अष्टम-गण:

| ९. कृ (करना-करणें). परस्मै वर्तमाने | | | १०. कृ (करना-करणें) आत्मने. | | |
|---|---|---|---|---|---|
| १. करोमि | कुर्व: | कुर्म: | १. कुर्वे | कुर्वहे | कुर्महे |
| २. करोषि | कुरुथः | कुरुथ | २. कुरुषे | कुर्वाथे | कुरुध्वे |
| ३. करोति | कुरुत: | कुर्वन्ति | ३. कुरुते | कुर्वाते | कुर्वते |

### भूते

| | | | | | |
|---|---|---|---|---|---|
| १. अकरवम् | अकुर्व | अकुर्म | १. अकुर्वि | अकुर्वहि | अकुर्महि |
| २. अकरो: | अकुरुतम् | अकुरुत | २. अकुरुथा: | अकुर्वाथाम् | अकुरुध्वम् |
| ३. अकरोत् | अकुरुताम् | अकुर्वन् | ३. अकुरुत | अकुर्वाताम् | अकुर्वत |

### आज्ञायाम्

| | | | | | |
|---|---|---|---|---|---|
| १. करवाणि | करवाव | करवाम | १. करवै | करवावहै | करवामहै |
| २. कुरु | कुरुतम् | कुरुत | २. कुरुष्व | कुर्वाथाम् | कुरुध्वम् |
| ३. करोतु | कुरुताम् | कुर्वन्तु | ३. कुरुताम् | कुर्वाताम् | कुर्वताम् |

### विधौ

| | | | | | |
|---|---|---|---|---|---|
| १. कुर्याम् | कुर्याव | कुर्याम | १. कुर्वीय | कुर्वीवहि | कुर्वीमहि |
| २. कुर्या: | कुर्यातम् | कुर्यात | २. कुर्वीथा: | कुर्वीयाथाम् | कुर्वीध्वम् |
| ३. कुर्यात् | कुर्याताम् | कुर्यु: | ३. कुर्वीत | कुर्वीयाताम् | कुर्वीरन् |

## पञ्चम-गण:

| ११. श्रु (सुनना-ऐकणें) परस्मै० वर्तमाने | | | १२. शक् (सकना-शकणें) परस्मै० | | |
|---|---|---|---|---|---|
| १. शृणोमि | शृणुव: शृण्व: | शृणुम: शृण्म: | १. शक्नोमि | शक्नुव: | शक्नुम: |
| २. शृणोषि | शृणुथ: | शृणुथ | २. शक्नोषि | शक्नुथ: | शक्नुथ |
| ३. शृणोति | शृणुत: | शृण्वन्ति | ३. शक्नोति | शक्नुत: | शक्नुवन्ति |

### भूते

| | | | | | |
|---|---|---|---|---|---|
| १. अशृणवम् | अशृणुव अशृण्व | अशृणुम अशृण्म | १. अशक्नवम् | अशक्नुव | अशक्नुम |
| २. अशृणो: | अशृणुतम् | अशृणुत | २. अशक्नो: | अशक्नुतम् | अशक्नुत |
| ३. अशृणोत् | अशृणुताम् | अशृण्वन् | ३. अशक्नोत् | अशक्नुताम् | अशक्नुवन् |

### आज्ञायाम्

| | | | | | |
|---|---|---|---|---|---|
| १. शृणवानि | शृणवाव | शृणवाम | १. शक्नवानि | शक्नवाव | शक्नवाम |
| २. शृणु | शृणुतम् | शृणुत | २. शक्नुहि | शक्नुतम् | शक्नुत |
| ३. शृणोतु | शृणुताम् | शृण्वन्तु | ३. शक्नोतु | शक्नुताम् | शक्नुवन्तु |

### विधौ

| | | | | | |
|---|---|---|---|---|---|
| १. शृणुयाम् | शृणुयाव | शृणुयाम | १. शक्नुयाम् | शक्नुयाव | शक्नुयाम |
| २. शृणुया: | शृणुयातम् | शृणुयात | २. शक्नुया: | शक्नुयातम् | शक्नुयात |
| ३. शृणुयात् | शृणुयाताम् | शृणुयु: | ३. शक्नुयात् | शक्नुयाताम् | शक्नुयु: |

## द्वितीय-गणः

१३. अस् (होना–होणें) परस्मै. वर्तमान १४. या (जाना–जाणें) परस्मै.

| | | | | | |
|---|---|---|---|---|---|
| १. अस्मि | स्वः | स्मः | १. यामि | यावः | यामः |
| २. असि | स्थः | स्थ | २. यासि | याथः | याथ |
| ३. अस्ति | स्तः | सन्ति | ३. याति | यातः | यान्ति |

भूते

| | | | | | |
|---|---|---|---|---|---|
| १. आसम् | आस्व | आस्म | १. अयाम् | अयाव | अयाम |
| २. आसीः | आस्तम् | आस्त | २. अयाः | अयातम् | अयात |
| ३. आसीत् | आस्ताम् | आसन् | ३. अयात् | अयाताम् | अयान्, अयुः |

आज्ञायाम्

| | | | | | |
|---|---|---|---|---|---|
| १. असानि | असाव | असाम | १. यानि | याव | याम |
| २. एधि | स्तम् | स्त | २. याहि | यातम् | यात |
| ३. अस्तु | स्ताम् | सन्तु | ३. यातु | याताम् | यान्तु |

विधौ

| | | | | | |
|---|---|---|---|---|---|
| १. स्याम् | स्याव | स्याम | १. यायाम् | यायाव | यायाम |
| २. स्याः | स्यातम् | स्यात | २. यायाः | यायातम् | यायात |
| ३. स्यात् | स्याताम् | स्युः | ३. यायात् | यायाताम् | यायुः |

१५. हन् (हनन करना–हनन करणें) वर्तमाने १६. नु (स्तुति करना स्तुति करणें)

| | | | | | |
|---|---|---|---|---|---|
| १. हन्मि | हन्वः | हन्मः | १. नौमि | नुवः | नुमः |
| २. हंसि | हथः | हथ | २. नौषि | नुथः | नुथ |
| ३. हन्ति | हतः | घ्नन्ति | ३. नौति | नुतः | नुवन्ति |

भूते

| | | | | | |
|---|---|---|---|---|---|
| १. अहनम् | अहन्व | अहन्म | १. अनवम् | अनुव | अनुम |
| २. अहन् | अहतम् | अहत | २. अनौः | अनुतम् | अनुत |
| ३. अहन् | अहताम् | अघ्नन् | ३. अनौत् | अनुताम् | अनुवन् |

आज्ञायाम्

| | | | | | |
|---|---|---|---|---|---|
| १. हनानि | हनाव | हनाम | १. नवानि | नवाव | नवाम |
| २. जहि | हतम् | हत | २. नुहि | नुतम् | नुत |
| ३. हन्तु | हताम् | घ्नन्तु | ३. नौतु | नुताम् | नुवन्तु |

विधौ

| | | | | | |
|---|---|---|---|---|---|
| १. हन्याम् | हन्याव | हन्याम | १. नुयाम् | नुयाव | नुयाम |
| २. हन्याः | हन्यातम् | हन्यात | २. नुयाः | नुयातम् | नुयात |
| ३. हन्यात् | हन्याताम् | हन्युः | ३. नुयात् | नुयाताम् | नुयुः |

१७. जागृ (जगना–जागणें) वर्तमाने १८. स्वप् (सोना–झोपणें) परस्मै

| | | | | | |
|---|---|---|---|---|---|
| १. जागर्मि | जागृवः | जागृमः | १. स्वपिमि | स्वपिवः | स्वपिमः |
| २. जागर्षि | जागृथः | जागृथ | २. स्वपिषि | स्वपिथः | स्वपिथ |
| ३. जागर्ति | जागृतः | जाग्रति | ३. स्वपिति | स्वपितः | स्वपन्ति |

भूते

| | | | | | |
|---|---|---|---|---|---|
| १. अजागरम् | अजागृव | अजागृम | १. अस्वपम् | अस्वपिव | अस्वपिम |
| २. अजागः | अजागृतम् | अजागृत | २. अस्वप(पी): | अस्वपितम् | अस्वपित |
| ३. अजागः | अजागृताम् | अजागरुः | ३. अस्वप(पी)त् | अस्वपिताम् | अस्वपन् |

आज्ञायाम्

| | | | | | |
|---|---|---|---|---|---|
| १. जागराणि | जागराव | जागराम | १. स्वपानि | स्वपाव | स्वपाम |
| २. जागृहि | जागृतम् | जागृत | २. स्वपिहि | स्वपितम् | स्वपित |
| ३. जागर्तु | जागृताम् | जाग्रतु | ३. स्वपितु | स्वपिताम् | स्वपन्तु |

विधौ

| | | | | | |
|---|---|---|---|---|---|
| १. जागृयाम् | जागृयाव | जागृयाम | १. स्वप्याम् | स्वप्याव | स्वप्याम |
| २. जागृयाः | जागृयातम् | जागृयात | २. स्वप्याः | स्वप्यातम् | स्वप्यात |
| ३. जागृयात् | जागृयाताम् | जागृयुः | ३. स्वप्यात् | स्वप्याताम् | स्वप्युः |

## नवम–गणः

१९. क्री (खरीदना–खरीदणें) वर्तमाने २० ज्ञा (जानना–जाणणें) परस्मै

| | | | | | |
|---|---|---|---|---|---|
| १. क्रीणामि | क्रीणीवः | क्रीणीमः | १. जानामि | जानीवः | जानीमः |
| २. क्रीणासि | क्रीणीथः | क्रीणीथ | २. जानासि | जानीथः | जानीथ |
| ३. क्रीणाति | क्रीणीतः | क्रीणन्ति | ३. जानाति | जानीतः | जानन्ति |

भूते

| | | | | | |
|---|---|---|---|---|---|
| १. अक्रीणाम् | अक्रीणीव | अक्रीणीम | १. अजानाम् | अजानीव | अजानीम |
| २. अक्रीणाः | अक्रीणीतम् | अक्रीणीत | २. अजानाः | अजानीतम् | अजानीत |
| ३. अक्रीणात् | अक्रीणीताम् | अक्रीणन् | ३. अजानात् | अजानीताम् | अजानन् |

आज्ञायाम्

| | | | | | |
|---|---|---|---|---|---|
| १. क्रीणानि | क्रीणाव | क्रीणाम | १. जानानि | जानाव | जानाम |
| २. क्रीणीहि | क्रीणीतम् | क्रीणीत | २. जानीहि | जानीतम् | जानीत |
| ३. क्रीणातु | क्रीणीताम् | क्रीणन्तु | ३. जानातु | जानीताम् | जानन्तु |

विधौ

| | | | | | |
|---|---|---|---|---|---|
| १. क्रीणीयाम् | क्रीणीयाव | क्रीणीयाम | १. जानीयाम् | जानीयाव | जानीयाम |
| २. क्रीणीयाः | क्रीणीयातम् | क्रीणीयात | २. जानीयाः | जानीयातम् | जानीयात |
| ३. क्रीणीयात् | क्रीणीयाताम् | क्रीणीयुः | ३. जानीयात् | जानीयाताम् | जानीयुः |

२१. दा (देना–देणें) वर्तमाने २२. भी (भयभीत होना–भिणें) परस्मै.

| | | | | | |
|---|---|---|---|---|---|
| १. ददामि | दद्वः | दद्मः | १. बिभेमि | बिभि (भी) वः | बिभि (भी) मः |
| २. ददासि | दत्थः | दत्थ | २. बिभेषि | बिभि (भी) थः | बिभि (भी) थ |
| ३. ददाति | दत्तः | ददति | ३. बिभेति | बिभि (भी) तः | बिभ्यति |

भूते

| | | | | | |
|---|---|---|---|---|---|
| १. अददाम् | अदद्व | अदद्म | १. अबिभयम् | अबिभि (भी) व | अबिभि (भी) म |
| २. अददाः | अदत्तम् | अदत्त | २. अबिभेः | अबिभि (भी) तम् | अबिभि (भी) त |
| ३. अददात् | अदत्ताम् | अददुः | ३. अबिभेत् | अबिभि (भी) ताम् | अबिभयुः |

आज्ञायाम्

| | | | | | |
|---|---|---|---|---|---|
| १. ददानि | ददाव | ददाम | १. बिभयानि | बिभयाव | बिभयाम |
| २. देहि | दत्तम् | दत्त | २. बिभि (भी) हि | बि (भी) भितम् | बिभि (भी) त |
| ३. ददातु | दत्ताम् | ददतु | ३. बिभेतु | बिभि (भी) ताम् | बिभ्यतु |

विधौ

| | | | | | |
|---|---|---|---|---|---|
| १. दद्याम् | दद्याव | दद्याम | १. बिभि (भी) याम् | बिभि (भी) याव | बिभि (भी) याम |
| २. दद्याः | दद्यातम् | दद्यात | २. बिभि (भी) याः | बिभि (भी) यातम् | बिभि (भी) यात |
| ३. दद्यात् | दद्याताम् | दद्युः | ३. बिभि (भी) यात् | बिभि (भी) याताम् | बिभि (भी) युः |

## सप्तम–गणः

२३. भिद् (भेदना–भेदणें) वर्तमाने २४. भुज् (भोजन करना–करणें) परस्म.

| | | | | | |
|---|---|---|---|---|---|
| १. भिनद्मि | भिन्द्वः | भिन्द्मः | १. भुनज्मि | भुंज्वः | भुंज्मः |
| २. भिनत्सि | भिन्त्थः | भिन्त्थ | २. भुनक्षि | भुङ्क्थः | भुङ्क्थ |
| ३. भिनत्ति | भिन्तः | भिन्दन्ति | ३. भुनक्ति | भुङ्क्तः | भुञ्जन्ति |

भूते

| | | | | | |
|---|---|---|---|---|---|
| १. अभिनदम् | अभिन्द्व | अभिन्द्म | १. अभुनजम् | अभुञ्ज्व | अभुञ्ज्म |
| २. अभिनः-त् | अभिन्तम् | अभिन्त | २. अभुनक्-ग् | अभुङ्क्तम् | अभुङ्क्त |
| ३. अभिनत्-द् | अभिन्ताम् | अभिन्दन् | ३. अभुनक् ग् | अभुङ्क्ताम् | अभुञ्जन् |

आज्ञायाम्

| | | | | | |
|---|---|---|---|---|---|
| १. भिनदानि | भिनदाव | भिनदाम | १. भुनजानि | भुनजाव | भुनजाम |
| २. भिद्धि | भिन्तम् | भिन्त | २. भुङ्ग्धि | भुङ्क्तम् | भुङ्क्त |
| ३. भिनत्तु | भिन्ताम् | भिन्दन्तु | ३. भुनक्तु | भुङ्क्ताम् | भुञ्जन्तु |

विधौ

| | | | | | |
|---|---|---|---|---|---|
| १. भिन्द्याम् | भिन्द्याव | भिन्द्याम | १. भुञ्ज्याम् | भुञ्ज्याव | भुञ्ज्याम |
| २. भिन्द्याः | भिन्द्यातम् | भिन्द्यात | २. भुञ्ज्याः | भुञ्ज्यातम् | भुञ्ज्यात |
| ३. भिन्द्यात् | भिन्द्याताम् | भिन्द्युः | ३. भुञ्ज्यात् | भुञ्ज्याताम् | भुञ्ज्युः |

## लृट् (भविष्यति)

२५. कृ ( परस्मै-पदी ) करेगा–करील कृ ( आत्मने-पदी )

| | | | | | | |
|---|---|---|---|---|---|---|
| १. | करिष्यामि | करिष्यावः | करिष्यामः | १. करिष्ये | करिष्यावहे | करिष्यामहे |
| २. | करिष्यसि | करिष्यथः | करिष्यथ | २. करिष्यसे | करिष्येथे | करिष्यध्वे |
| ३. | करिष्यति | करिष्यतः | करिष्यन्ति | ३. करिष्यते | करिष्येते | करिष्यन्ते |

**प्रश्न—१. अधोलिखित-रूपेषु मूल-धातुः कथ्यताम् ।**

| | | | | | |
|---|---|---|---|---|---|
| दास्यति | श्रोष्यति | भविष्यति | हनिष्यति | पठिष्यति | द्रक्ष्यति |
| स्थास्यति | नेष्यति | गमिष्यति | मरिष्यति | लेखिष्यति | वक्ष्यति |
| ज्ञास्यति | जेष्यति | पतिष्यति | तरिष्यति | भक्षयिष्यति | वत्स्यति |

**२. निम्न-लिखित-वाक्यानाम् अर्थः उच्यताम्—**

भारतस्य प्रधान-मन्त्री भविष्यामि, वृद्धानां वचनं श्रोष्यामि, धर्मं चरिष्यामि, शत्रून् हनिष्यामि, कामं च जेष्यामि। धन-धान्य-सम्पन्नं मे राष्ट्रं कदा द्रक्ष्यामि ? दुर्जनः मरिष्यति, सुजनः तरिष्यति। पुण्याचरणेन अहं स्वर्गं गमिष्यामि, पापाचरणेन त्वं नरकं यास्यसि ।

## धातूनां कर्मणि-रूपाणाम् अभिज्ञानार्थं सूचिः—

( एतेषां नित्यम् आत्मने पदम् ) कृ क्रियते ( किया जाता–केलें जातें )

| | | | | | | | | | |
|---|---|---|---|---|---|---|---|---|---|
| त्यज् | त्यज्यते | स्तु | स्तूयते | दा | दीयते | कृ | क्रियते | वह् | उह्यते |
| लभ् | लभ्यते | श्रु | श्रूयते | पा | पीयते | धृ | ध्रियते | वद् | उद्यते |
| हन् | हन्यते | नी | नीयते | स्था | स्थीयते | हृ | ह्रियते | वच् | उच्यते |
| कथ् | कथ्यते | क्री | क्रीयते | मा | मीयते | दृ | आ+द्रियते | स्वप् | सुप्यते |
| इष् | इष्यते | भू | भूयते | गै | गीयते | भृ | भ्रियते | ह्वे | हूयते |
| दृश् | दृश्यते | तड् | ताड्यते | ज्ञा | ज्ञायते | स्मृ | स्मर्यते | बन्ध् | बध्यते |

शेषः पृथ्वीं धारयति। अहं भोजनं करोमि। रामः रावणं हन्ति। बालः कथां शृणोति।
शेषेण पृथ्वी धार्यते। मया भोजनं क्रियते। रामेण रावणः हन्यते। बालेन कथा श्रूयते।

## धातूनां णिजन्त-(प्रयोजक-) रूपाणाम् अभिज्ञानार्थं सूचिः—

| | | | | | |
|---|---|---|---|---|---|
| गमयति | पाठयति | दर्शयति | कारयति | गोपयति | दापयति |
| नमयति | नाशयति | श्रावयति | हारयति | रोपयति | स्थापयति |
| श्रमयति | हासयति | नाययति | मारयति | घातयति | स्नापयति |
| रमयति | ग्राहयति | लेखयति | स्मारयति | पाययति | यापयति |
| जनयति | चालयति | प्रवेशयति | वारयति | | भापयति |
| भ्रमयति | स्वापयति | द्रावयति | तारयति | | ज्ञापयति |

**प्रश्नः—एतेषां धातु-रूपाणां मूल-धातुः कथ्यताम् ।**

नृपः यज्ञं करोति। पुत्रः पत्रं लिखति। भूपः शत्रुं हन्ति।
वसिष्ठः नृपेण यज्ञं कारयति। जननी पुत्रेण पत्रं लेखयति। मंत्री भूपेन शत्रुं घातयति।

## उपयुक्त–धातु–कोशः

( क०—करना-करणें, ०—ना–णें )

### प्रथम–गणः

अट् अटति भटक०
अर्च् अर्चति अर्चन क०
अर्ह् अर्हति योग्य हो०
ईक्ष् ईक्षते देखना–पहाणें
अपेक्षते अपेक्षा क०
उपेक्षते उपेक्षा क०
निरीक्षते निरीक्षण क०
परीक्षते परीक्षा क०
प्रतीक्षते राह देख०वाटप०
कम्प् कम्पते काँपना–कांपणें
कुर्द् कूर्दति-ते कूदना-कुदणें
क्रन्द् क्रन्दति रोना–रडणें
क्रीड् क्रीडति खेलना-खेळणें
क्षम् क्षमते क्षमा क०
खन् खनति खोद०
खाद् खादति खा०
खेल् खेलति खेलना-खेळणें
गम् गच्छति जा०
आगच्छति आना-येणें
गर्ज् गर्जति गरज०
गल् गलति गलना-गळणें
गुह् गूहति-ते छिपाना-लपवि०
गै गायति गा०
घुर् घोरति घुर्राना-घोरणें
घ्रा जिघ्रति सूंघना-वास घे०
चर्व् चर्वति चबाना-चावणें
चल् चलति चलना-चालणें
चुम्ब् चुम्बति चूमना-चुंबणें
जल्प् जल्पति बकना-बडबड०
जि जयति जीतना-जिंकणें
विजयते विजयी हो०
पराजयते पराजित क०
जीव् जीवति जीना-जगणें

ज्वल् ज्वलति जलना-जळणें
डी डयते उड०
तप् तपति तपना–तापणें
तृ तरति तर०
अवतरति उतर०
उत्तरति उत्तर दे०
वितरति बाँटना-वांटणें
त्यज् त्यजति त्याग क०
त्रै त्रायते बचाना-वाचविणें
दंश् दशति डँसना, डसणें
दह् दहति जलाना-जाळणें
दा यच्छति देना–देणें
दृश् पश्यति देखना-पहाणें
द्युत् द्योतते प्रकाश०
द्रु द्रवति पिघलना-वितळणें
धाव् धावति दौडना–धावणें
धृ धरति धर०
ध्यै ध्यायति ध्यान क०
नट् नटति अभिनय क०
नन्द् नन्दति आनंदित हो०
नम् नमति नमस्कार क०
निन्द् निन्दति निन्दा क०
नी नयति-ते ले जाना-नेणें
आनयति-ते लाना-आणणें
अपनयति-ते अलग क०
अनुनयति-ते अनुनय क०
निर्णयति निर्णय क०
परिणयति विवाह क०
पच् पचति पकाना, शिजविणें
पठ् पठति पढ०, पठन क०
पत् पतति गिरना-पडणें
उत्पतति उड०
पा पिबति पीना, पिणें

प्रेष् प्रेषति भेजना-पाठविणें
फल् फलति फलना-फळणें
फुल्ल् फुल्लति फुल०
बाध् बाधते कष्ट दे०
बुध् बोधति-ते बोध हो०
भज् भजति-ते भज०
भिक्ष् भिक्षते भीख माँगना
भाष् भाषते भाषण क०
भास् भासते भास०
भू भवति हो०, बन०
अनुभवति अनुभव लेना
उद्भवति उत्पन्न हो०
पराभवति पराभव क०
सम्भवति संभव हो०
भृ भरति भर०, पोषण क०
भ्रम् भ्रमति भ्रम०
भ्रंश् भ्रंशते भ्रष्ट हो०
मील् मीलति जुट०
मुद् मोदते मुदित हो०
मूर्च्छ् मूर्च्छति मूर्च्छित हो०
म्लै म्लायति म्लान हो०
यज् यजति-ते यज्ञ क०
यत् यतते प्रयत्न क०
याच् याचते याचना क०
रक्ष् रक्षति रक्षण क०
रम् रमते रम०
रुच् रोचते रुच०
रुह् रोहति बढना-वाढणें
आरोहति चढ०
अवरोहति उतर०
लभ् लभते पाना-मिळणें
वद् वदति बोल०
वन्द् वन्दते वंदन क०
वम् वमति वमन क०

| | | |
|---|---|---|
| वस् | वसति | बसना-राहणें |
| वह् | वहति-ते | बहना-वाहणें |
| ,, | ,, | ढोना-वाहून नेणें |
| | निर्वहति | निर्वाह क० |
| वाञ्छ् | वाञ्छति | वांछा क० |
| वृत् | वर्तते | होना-असणें |
| | निवर्तते | निवृत्त हो० |
| | परावर्तते | लौटना-परतणें |
| वृध् | वर्धते | बढना-वा णें |
| वृष् | वर्षति | बरसना-वर्षणें |
| व्यय् | व्ययति-ते | खर्च क० |
| शंस् | शंसते | प्रशंसा क० |
| शङ्क् | शङ्कते | शंका क० |
| शप् | शपति-ते | शाप दे० |
| शिक्ष् | शिक्षते | सीखना-शिकणें |
| शुच् | शोचति | शोक क० |
| शुभ् | शोभते | शोभा क० |
| श्रि | श्रयति-ते | आश्रय क० |
| सद् | सीदति | गलना-गळणें |
| | | बै ना-बसणें |
| सृ | सरति | सरक० |
| | प्रसीदति | प्रसन्न हो० |
| सस्ज् | सज्जति | तयारी क० |
| सह् | सहते | सह०, सहन क० |
| सेव् | सेवते | सेवा क० |
| स्खल् | स्खलति | चुकना-चूकणें |
| स्था | तिष्ठति | थंबना-थांबणें |
| | उत्तिष्ठति | उठना-उठणें |
| स्पर्ध् | स्पर्धते | स्पर्धा क० |
| स्मि | स्मयते | मुस्कराना |
| स्मृ | स्मरति | स्मरण क० |
| | विस्मरति | विस्मरण हो० |
| स्वाद् | स्वादते | स्वाद लेना-घेणें |
| स्रु | स्रवति | पझरना-पाझरणें |
| हस् | हसति | हस० |
| हिण्ड् | हिण्डते | घूमना-हिंडणें |
| हृ | हरति-ते | हरण क० |
| | आहरति | लेना-घेणें |
| | उद्धरति | उद्धार क० |
| | प्रहरति | प्रहार क० |
| | विहरति | विहार क० |
| | व्यवहरति | व्यवहार क० |
| | संहरति | संहार क० |
| | अपहरति | अपहरण क० |
| ह्वे | ह्वयति-ते | बुलाना बोला० |

## द्वितीय-गणः

| | | |
|---|---|---|
| अस् | अस्ति | होना असणें |
| जागृ | जागर्ति | जाग० |
| नु | नौति | स्तुति क० |
| पा | पाति | रक्षण क० |
| भा | भाति | दिखना-दिसणें |
| या | याति | जाना, जाणें |
| | आयाति | आना-येणें |
| रु | रौति | शब्द क० |
| वा | वाति | बहना-वाहणें |
| श्वस् | श्वसिति | श्वास लेना |
| | आश्वसिति | आश्वासन दे० |
| स्तु | स्तौति | स्तुति क० |
| स्ना | स्नाति | स्नान क० |
| स्वप् | स्वपिति | सोना-झोपणें |
| हन् | हन्ति | हनन क० |

## तृतीय-गणः

| | | |
|---|---|---|
| दा | ददाति | दे० |
| भी | बिभेति | भयभीत हो० |
| धा | दधाति | रखना-ठेवणें |
| मा | मिमीते | माप० |
| भृ | बिभर्ति | धारण क० |
| हा | जहाति | त्याग क० |

## चतुर्थ-गणः

| | | |
|---|---|---|
| अस् | अस्यति | फेंक० |
| कुप् | कुप्यति | कुपित हो० |
| क्रम् | क्राम्यति | चलना-चालणें |
| क्रुध् | क्रुध्यति | क्रुद्ध हो० |
| क्षिप् | क्षिप्यति | फेंकना |
| क्षुभ् | क्षुभ्यति | क्षुब्ध हो० |
| खिद् | खिद्यते | खिन्न हो० |
| जन् | जायते | उत्पन्न हो० |
| तुष् | तुष्यति | तुष्ट हो० |
| तृप् | तृप्यति | तृप्त हो० |
| त्रुट् | त्रुट्यति | टूटना-तुटणें |
| दिव् | दीव्यति | जुवा खेलना |
| दुष् | दुष्यति | दूषित हो० |
| द्रुह् | द्रुह्यति | द्रोह क० |
| नश् | नश्यति | नष्ट हो० |
| नृत् | नृत्यति | नाच० |
| पुष् | पुष्यति | पोस० |
| भ्रम् | भ्राम्यते | भ्रमण क० |
| मद् | माद्यति | उन्मत्त हो० |
| मन् | मन्यते | मान० |
| मुह् | मुह्यति | मोहित हो० |
| युद्ध् | युद्धते | युद्ध क० |
| लुप् | लुप्यति | लुप्त हो० |
| लुभ् | लुभ्यति | लुब्ध हो० |
| विद् | विद्यते | होना असणें |
| शम् | शाम्यति | शांत हो० |
| शुध् | शुध्यति | शुद्ध हो० |
| श्रम् | श्राम्यति | श्रम क० थक० |
| सिध् | सिध्यति | सिद्ध हो० |
| सिव् | सीव्यति | सीना-शिवणें |
| सो | स्यति | समाप्त क० |
| स्निह् | स्निह्यति | स्नेह क० |
| हृष् | हृष्यति | हर्षित हो० |

## पञ्चम—गणः

| | | |
|---|---|---|
| आप् आप्नोति प्राप्त क० | वृ वृणोति पसंद क० | साध् साध्नोति साध्य क० |
| चि चिनोति संचय क० | शक् शक्नोति सकना शकणें | सु सुनोति रस निकालना |
| धु धुनोति हल०,हिलाना | श्रु शृणोति सुनना-ऐकणें | स्तृ स्तृणोति ढकना, झांकणें |

## षष्ठ—गणः

| | | |
|---|---|---|
| इष् इच्छति इच्छा क० | प्रच्छ् पृच्छति प्रश्न क० | लिप् लिम्पति-ते लीपना-लिंपणें |
| कृत् कृन्तति काटना | मस्ज् मज्जति मज्जन क० | विश् विशति प्रवेश क० |
| कृ किरति विकीर्ण क० | मिल् मिलति मिलना मिळणें | उप+बैठना-बसणें |
| दिश् दिशति दर्शाना-दाखविणें | मुच् मुंचति-ते मुक्त क० | प्र + प्रवेश क० |
| आ + आज्ञा क० | मृ म्रियते मरना | सिच् सिंचति-ते सिंचन क० |
| उप + उद्देश क० | लस्ज लज्जते लजाना, लाजणें | सृज् सृजति उत्पन्न क० |
| दृ आदरति आदर क० | लिख् लिखति लिखना-लिहिणें | स्पृश् स्पृशति स्पर्श क० |

## सप्तम—गणः

| | | |
|---|---|---|
| छिद् छिनत्ति छेद क० | भुज् भुनक्ति भोजन क० | रिच् रिणक्ति रिक्त क० |
| भिद् भिनत्ति भेद क० | युज् युनक्ति जोड० | रुध् रुणद्धि रोकना-अडविणें |

## अष्टम—गणः

| | | |
|---|---|---|
| कृ करोति, कुरुते करना | वन् वनुते याचना क० | तन् तनोति, तनुते तान० |

## नवम—गणः

| | | |
|---|---|---|
| क्री क्रीणाति खरीदना | पू पुनाति पवित्र क० | बन्ध् बध्नाति बांधना |
| वि+बेचना-विकणें | प्री प्रीणाति संतुष्ट क० | ग्रह् गृह्णाति लेना-घेणें |

## दशम—गणः

| | | |
|---|---|---|
| अर्थ् अर्थयते याचना क० | तड् ताडयति-ते ताडन क० | भूष् भूषयति-ते भूषित क० |
| कथ् कथयति-ते कथन क० | तर्क् तर्कयति ते तर्क क० | मन्त्र् मन्त्रयते सलाह देना |
| कम् कामयते इच्छा क० | तुल् तोलयति-ते तोल० | मार्ग् मार्गयति-ते शोध क० |
| कृत् कीर्तयति वर्णन क० | दण्ड् दण्डयति-ते दण्ड क० | मृग् मृगयति-ते मृगया क० |
| क्षल् क्षालयति-ते धोना-धुणें | दृ दारयति-ते विदारण क० | युज् योजयति-ते योजना क० |
| खण्ड् खण्डयति-ते तोड० | धृ धारयति धारण क० | रच् रचयति-ते रच० |
| गण् गणयति-ते गणना क० | पार् पारयति-ते समर्थ हो० | वंच् वंचयति-ते फँसाना-फसविणें |
| घुष् घोषयति-ते घोषणा क० | पाल् पालयति-ते पालन क० | वर्ण् वर्णयति-ते वर्णन क० |
| चिन्त् चिन्तयति-ते चिंता क० | पीड् पीडयति-ते कष्ट दे० | गल् गालयते छान० |
| चुर् चोरयति-ते चोरी क० | पूज् पूजयति-ते पूजा क० | सान्त्व् सान्त्वयति-ते सांत्वन क० |
| चूर्ण् चूर्णयति-ते चूर्ण क० | प्री प्रीणयति-ते संतुष्ट क० | सूच् सूचयति-ते सूचना दे० |
| छद् छादयति-ते छाना-छावणें | भक्ष् भक्षयति-ते खाना | स्पृह् स्पृहयति-ते कामना क० |

## केचन कृदन्ताः

| | | | | | | |
|---|---|---|---|---|---|---|
| स्पर्शः | लाभः | श्रमः | स्पर्धा | कृतिः | दर्शनं | पूजकः |
| हर्षः | त्यागः | भ्रमः | रक्षा | भीतिः | भाषणं | याचकः |
| वर्षः | नाशः | दण्डः | उ | नीतिः | स्मरणं | रक्षकः |
| खेदः | वासः | कम्पः | परीक्षा | मतिः | शिक्षणं | वञ्चकः |
| स्नेहः | तापः | दंश | शङ्का | नतिः | ध्यानं | योजकः |
| क्षोभः | भासः | अर्थः | इच्छा | गतिः | वन्दनं | ग्राहकः |
| मोहः | पातः | तर्कः | दिशा | रतिः | स्नानं | गायकः |
| कोपः | दाहः | शमः | लज्जा | शान्तिः | भोजनं | लेखकः |
| लोभः | वादः | मन्त्रः | माया | भ्रान्तिः | पानं | चोरः |
| द्रोहः | हासः | भ्रंशः | बाधा | युक्तिः | मरणं | योधः |
| तोषः | पाकः | ग्रहः | मूर्च्छा | शक्तिः | वञ्चनं | जीवः |
| शोकः | पाठः | त्रुटिः | कथा | तृप्तिः | रक्षणं | चरः |
| मोदः | भासः | भ्रमिः | क्षमा | सृष्टिः | वर्धनं | वरः |
| सेकः | श्वासः | जनिः | पीडा | श्रुतिः | जननं | पचः |
| जयः | संहारः | सूचिः | पृच्छा | प्रीतिः | गमनं | हरः |

प्रश्नः—कस्मात् धातोः आगतः उपरि लिखितः प्रत्येकः शब्दः ?

| कर्ता | करने योग्य | करण्यास योग्य | | बोलता हुआ | बोलत असलेला |
|---|---|---|---|---|---|
| (तृच्) | (तव्य) | (अनीय) | (य) | (शतृ) (परस्मैपदिधातुतः) | (शानच्) (आत्मनेपदिधातुतः) |
| कर्ता | कर्तव्य | करणीय | कार्य | | |
| | | | ग्राह्य | वदन् | भाषमाण |
| दाता | दातव्य | दानीय | दृश्य | गच्छत् | कम्पमान |
| वक्ता | ग्रहीतव्य | ग्रहणीय | क्षम्य | पतत् | याचमान |
| जेता | नेतव्य | हरणीय | रम्य | पश्यत् | वर्धमान |
| द्रष्टा | स्मर्तव्य | स्मरणीय | भक्ष्य | स्पृशत् | वर्तमान |
| श्रोता | मन्तव्य | मननीय | भोज्य | पठत् | लज्जमान |
| नेता | द्रष्टव्य | दर्शनीय | चोष्य | वसत् | क्रियमाण |
| भोक्ता | कथयितव्य | कथनीय | श्राव्य | स्खलत् | नीयमान |
| हन्ता | श्रोतव्य | श्रवणीय | निन्द्य | ध्यायत् | श्रूयमाण |
| भर्ता | रक्षितव्य | रक्षणीय | प्राप्य | चिन्तयत् | दृश्यमान |
| योद्धा | छेत्तव्य | छेदनीय | गेय | कथयत् | हन्यमान |
| गन्ता | स्तोतव्य | स्तवनीय | देय | इच्छत् | कुर्वाण |
| रचयिता | त्रातव्य | प्रेक्षणीय | सेव्य | कुर्वत् | बिभ्राण |
| विक्रेता | ध्यातव्य | अभिनन्दनीय | वन्द्य | बिभ्रत् | शृण्वान |
| ज्ञाता | त्यक्तव्य | पूजनीय | स्तुत्य | शृण्वत् | शयान |

१. प्रश्नः—उपरि लिखितस्य प्रत्येकस्य शब्दस्य मूल-धातुं कथयत ।

२. ऐतेषां वाक्यानाम् अर्थः उच्यताम्—

१. शीतेन कम्पमानाय भिक्षवे दाता वस्त्रं ददाति । २. प्रेक्षणीयं प्रदर्शनम् इदम्। ३. रमणीयं स्थलं दर्शय । ४. धर्मः रक्षणीयः । ५. गुरुः वन्दनीयः । ६. भगवद्गीता पठनीया । ७. नियमः स्मर्तव्यः । ८. पात्रे दानं करणीयम् । अपात्रे दानं न दातव्यम् । ९ शोकः त्यक्तव्यः । १०. वर्धमानः स्नेहः तस्य ।

| (कर्मणि-क्त–त) | | निष्ठा-प्रत्ययान्ताः | | (कर्तरि–क्तवतु–तवत्) | |
|---|---|---|---|---|---|
| स्नात | दृष्ट | रत | त्यक्त | रक्षित | जितवत् |
| ज्ञात | इष्ट | गत | उक्त | मूर्च्छित | ज्ञातवत् |
| जित | नष्ट | नत | मुक्त | लज्जित | श्रुतवत् |
| नीत | भ्रष्ट | हत | रिक्त | पतित | पृष्टवत् |
| भीत | पृष्ट | मत | युक्त | लिखित | गतवत् |
| क्षिप्त | सृष्ट | जात | सुप्त | भाषित | हतवत् |
| लिप्त | हृष्ट | स्थित | मूढ | पठित | उक्तवत् |
| कृत | क्रुद्ध | पीत | गूढ | भक्षित | स्मृतवत् |
| स्मृत | बुद्ध | गीत | सोढ | वञ्चित | त्यक्तवत् |
| श्रुत | वृद्ध | शान्त | दत्त | कथित | कथितवत् |
| स्तुत | दग्ध | श्रान्त | म्लान | उषित | क्षितवत् |
| भूत | स्निग्ध | मग्न | तीर्ण | गृहीत | गृहीतवत् |

प्रश्नः — १. उपरि निर्दिष्टेषु शब्देषु विद्यमानाः धातवः लिख्यन्ताम्—

२. निम्नलिखित–वाक्यानां सम्यक् निरीक्षणं क्रियताम्––

१. रामेण पर्वतः दृष्टः । रामेण नदी दृष्टा । रामेण वनम् दृष्टम् ।
२. रामः पर्वतम् दृष्टवान् । रामः नदीम् दृष्टवान् । रामः वनम् दृष्टवान् ।

३. अधस्तन-वाक्यानां परिवर्तनं द्वितीय-प्रश्नस्थ-वाक्यानुसारेण क्रियताम् ।

१. भारतेन स्वातन्त्र्यं लब्धम् । २. राष्ट्रपतिः बन्दिजनान् मुक्तवान् । ३. वाल्मीकिना रामायणम् रचितम् । ४. श्रीकृष्णः गीतां कथितवान् । ५. स्वमांसं दत्वा शिबिनृपेण कपोतः रक्षितः । ६. विष्णुः गजेन्द्रम् उद्धृतवान् । ७. मार्जारेण मूषकः धृतः ।

४. अधोलिखित-वाक्यांशानाम् अर्थः उच्यताम्––

स्नातः बालः । ज्ञातं तत्वम् । जितं राष्ट्रम् । नीता माला । भीता नारी । क्षिप्तः कंदुकः । लिप्ता भूमिः । कृतः प्रयत्नः । स्मृताः श्लोकाः । श्रुताः कथाः । स्तुता देवता ।

४. रिक्त-स्थाने योग्यः शब्दः स्थाप्यताम्––

कंसम् हतवान्—।—वनम् दग्धम् ।—अपराधम् कृतवान् । मया जलम्—।—दुःखम् सोढम् । लक्ष्मणः— वने त्यक्तवान् ।

४. एतेषां धातूनां निष्ठा-प्रत्ययान्त-रूपाणि कथ्यताम्––

हृ, मृ, क्री, छिद्, दण्ड्, रच्, पूज्, वर्ण्, शक्, उपविश्, स्पृश् ।

## तुमुन्-प्रत्ययान्ताः

( दातुम्-देनेको, देने के हेतुमे ) ( दातुम्-देण्यास, देण्याच्या हेतुनें )

| | | | | | |
|---|---|---|---|---|---|
| दातुम् | नेतुम् | रन्तुम् | द्रष्टुम् | पठितुम् | कथयितुम् |
| ज्ञातुम् | श्रोतुम् | गन्तुम् | स्रष्टुम् | भवितुम् | रचयितुम् |
| पातुम् | स्तोतुम् | हन्तुम् | प्रष्टुम् | भाषितुम् | मन्त्रयितुम् |
| स्थातुम् | कर्तुम् | त्यक्तुम् | आरोढुम् | खनितुम् | पूजयितुम् |
| स्नातुम् | धर्तुम् | वक्तुम् | सोढुम् | तरितुम् | भक्षयितुम् |
| प्राप्तुम् | हर्तुम् | लब्धुम् | वोढुम् | भिक्षितुम् | नाशयितुम् |
| ध्यातुम् | छेत्तुम् | बोद्धुम् | त्रातुम् | रक्षितुम् | चालयितुम् |
| गातुम् | जेतुम् | दग्धुम् | पक्तुम् | ग्रहीतुम् | स्थापयितुम् |

प्रश्नः--१ अत्र लिखितस्य प्रत्येकस्य शब्दस्य धातुः कथ्यताम् ।

२. निम्न-लिखित-वाक्यानाम् अर्थः उच्यताम्--

१. ईश्वरस्य शक्तिं ज्ञातुं कः शक्नोति ? २. आत्मनः राष्ट्रं समृद्धं कर्तुं प्रयते। ३. दरिद्रस्य कथां श्रोतुं न कः अपि इच्छति। ४. उन्नतेः शिखरम् आरोढुं मे प्रयत्नः। ५. किं प्रष्टुं-वाञ्छसि ? ६. तत्र गन्तुं मे निश्चयः। ७. किञ्चित् वक्तुम् इच्छामि। ८. भारं वोढुं समर्थः अहम्।

## क्त्वाच्-प्रत्ययान्ताः

| | | | | | |
|---|---|---|---|---|---|
| ज्ञात्वा | नीत्वा | अप+नीय | जित्वा | वि+जित्य | रक्षित्वा |
| स्तुत्वा | भूत्वा | अनु+भूय | हृत्वा | प्र+हृत्य | लिखित्वा |
| त्यक्त्वा | दत्वा | प्र+दाय | कृत्वा | उप+कृत्य | पठित्वा |
| उक्त्वा | गृहीत्वा | परि+गृह्य | श्रित्वा | आ+श्रित्य | भाषित्वा |
| भुक्त्वा | नत्वा | प्र+णम्य | स्मृत्वा | सं+स्मृत्य | कथयित्वा |
| पृष्ट्वा | गत्वा | आ+गम्य | धृत्वा | उद्+धृत्य | भक्षयित्वा |
| पीत्वा | क्रीत्वा | वि+क्रीय | चित्वा | सं+चित्य | धारयित्वा |
| ध्यात्वा | स्थित्वा | उप+स्थाय | श्रुत्वा | प्रति+श्रुत्य | वर्णयित्वा |
| हत्वा | दृष्ट्वा | संदृश्य | हृत्वा | अप+हृत्य | चिन्तयित्वा |
| बद्ध्वा | दग्ध्वा | संदह्य | स्तुत्वा | प्र+स्तुत्य | उषित्वा |

प्रश्नः--वाक्यानाम् अर्थः उच्यताम्—

१. स्नानं कृत्वा बहिः गच्छ। २. भोजनं त्यक्त्वा कथं गच्छसि ? ३. दुग्धं पीत्वा सर्पः विषं वमति। ४. गृहं गत्वा भोजनं करिष्यामि। ५. वृद्धः यष्टिं धृत्वा गच्छति। ६. जननीं प्रणम्य सः ग्रामं गतवान्। ७. कुम्भकर्णं दृष्ट्वा वानराः भीताः। ८ पुस्तकं क्रीत्वा रामाय देहि। ९. दुःखम् अनुभूय सुखं शोभते।

संस्कृत-भाषा-प्रचारि-सभायाः

# मौखिक-संस्कृत-परीक्षाः

संस्कृत-भाषाप्रचारि-सभायाः निम्न-लिखित-मौखिक-परीक्षाः प्रतिवर्षं भविष्यन्ति । एताः सर्वाः परीक्षाः मौखिक्यः एव वर्तन्ते । परीक्षाः प्रतिवर्षं द्विवारं ख्रिस्ताब्दस्य प्रथमे मासि अष्टमे मासि च (एवं हेमन्तर्तौ वर्षर्तौ च) भविष्यन्ति । द्वयोःपरीक्षयोः मध्ये भवेत् षण्मासानाम् अन्तरम् । नागपुर-स्थाः नागपुरात् बहिःस्थाः च परीक्षार्थिनःबालक-बालिकाःच परीक्षार्हाः भवेयुः । परीक्षा-शुल्कं प्रतिच्छात्रं चतुराणकं केवलम् । यदि दशसंख्याधिकाः परीक्षार्थिनः आवेदन-पत्रं सर्वकार-मान्य-विद्यालयस्य मुख्याध्यापकद्वारा प्रेषयिष्यन्ति तर्हि परीक्षा-केन्द्रस्य आयोजनं मुख्याध्यापक-महाभागस्य सहकार्येण कर्तुं शक्यते । आवेदन-पत्राणि परीक्षाशुल्केन सह परीक्षा-मासस्य मासपूर्वं प्रेषणीयानि । आवेदन-पत्रे परीक्षार्थिनः नाम, पितुः नाम, कुल-नाम, वयः, पाठशालां, निवास-स्थानं,केन्द्र-नाम, पूर्वोत्तीर्णपरीक्षायाः परीक्षार्थ्यनुक्रमाङ्कं च लिखन्तु । परीक्षोत्तीर्णच्छात्रेभ्यः प्रमाण-पत्राणि प्रदीयन्ते यथासमयम् । श्रेणिगुणानां प्रतिशतता अधोलिखिता भवेत्—

| | |
|---|---|
| प्रथम-श्रेणिः | ८०–१०० |
| द्वितीय-श्रेणिः | ६०–७९ |
| तृतीय-श्रेणिः | ४०–५९ |
| प्रावीण्यम् | ९०–१०० |

एतासां परीक्षाणां नामानि पाठ्य-क्रमः पुस्तक-नामानि च अधः लिख्यन्ते । पाठ्यक्रमान्तर्गतानां द्वादश-पाठ्य-पुस्तिकानां मूल्यम् आणक-द्वयं प्रत्येकम् ।

**प्रथम-परीक्षा-**

१. बालामृत-शतश्लोकी
२. सुलभ-शब्द-रूपावलिः
३. व्यवहार-प्रश्नोत्तरी

**द्वितीय-परीक्षा-**

४. उपयुक्त-धातुरूपावलिः
५. हितोपदेश-कथाः
६. संक्षिप्तामरकोशः

प्रथम-परीक्षायाः पाठ्यक्रमः च ।

**तृतीय-परीक्षा-**

७. छात्रामृत-शतश्लोकी
८. रामायण-कथा
९. व्यवहार-सूक्तावलिः

द्वितीय-परीक्षायाः पाठ्य-क्रमः च ।

**संस्कृत-प्रवेश-परीक्षा-**

१०. महाभारत-कथाः
११. नाट्य-प्रवेशः
१२. कौमुदी-प्रवेशः

तृतीय-परीक्षायाः पाठ्य-क्रमः च ।

धर्मपीठम्
नागपुरम् १

स. ना. कुलकर्णी
सं. भा. प्र. सभायाः
प्रमुख-कार्यवाहः



इयं पुस्तिका वर्धानगरस्थ-राष्ट्रभाषा-प्रचार-समितेः मुद्रणालये मुद्रिता नागपुरस्थ-संस्कृत-भाषा-प्रचारि-सभा-द्वारा प्रमुख-कार्यवाहेन धर्मपीठे कुलकर्णी-भवने प्रकाशतां च नीता ।

संस्कृत-भाषा-प्रचार-वाङ्मयमाला

# हितोपदेश—कथाः

( बालानां कृते )

श्रीमताम्
देशमुख-कुलावतंसानां
शामराव-महोदयानां
दानानुग्रहफलम्
इदम् ।



रचयिता—ह. य. तेलंग
B. A. (Hons), B. T.





द्वितीयं संस्करणम् ।

पञ्चमं पुष्पम् ]     १९५५     [ मूल्यम् आणक-द्वयम्

# हृद्गतम् ।

संकृत-वाङ्मये बालानां कृते लिखिताः ये केचन अल्प-संख्याकाः ग्रन्थाः सन्ति तेषु विद्यते आद्यं स्थानं हितोपदेश-नाम्नः ग्रन्थस्य । अस्य ग्रन्थस्य रचनस्य प्रयोजनं ग्रन्थकर्त्रा स्पष्टम् उक्तम्—'कथाच्छलेन बालानां नीतिस्तदिह कथ्यते' । बालानाम् अपि 'नित्यम् उन्मार्गगामिनाम्' इति विशेषण-पदेन सुष्ठु वर्णनं कृतम् ।

यौवनं धन-सम्पत्तिः प्रभुत्वमविवेकिता । एकैकमप्यनर्थाय किमु यत्र चतुष्टयम् ।।

एवं भूतम् ऐश्वर्यं भुञ्जानानां बालानां सत्पथ-प्रदर्शनाय अन्धे तमसि ज्ञानमयः अयं प्रदीपः एव ननु प्रज्वालितः ग्रन्थकर्त्रा । बालानां कथा-श्रवणे रुचिः अदम्या । सा अशमनीया जिज्ञासा हविषा अग्निः इव भूय एव अभिवर्धते । हंस-काक-बकादीनां शशक-जम्बुक-व्याघ्र-सिंहादीनां च कथानुसन्धानेन बालानां पुरतः नीति-तत्वानि सोदाहरणम् उपन्यस्य तेषाम् आचरणे इष्टं परिवर्तनं घटयितुम् एषः उत्तमः प्रबन्धः कृतः । स्वातन्त्र्य-प्राप्तेः अनन्तरम् अपि अस्माकं चारित्र्यं साकल्येन अद्यापि न विशुद्धम् इति उच्चैः उद्घोष्यते सर्वैः अस्मन्नेतृभिः । विद्यालयीन-शिक्षणक्रमे न विद्यते प्रभावि आयोजनं नीति-शिक्षणस्य । एषा न्यूनता पाठ्य-पुस्तकेषु हितोपदेश-ग्रन्थस्य समावेशं कृत्वा दूरीकरणीया इति सुतराम् इष्यते राष्ट्रहितैषिभिः । अस्याः त्रुटेः ईषत् निरसनम् अनेन स्वल्प-प्रयत्नेन भवेत् इति वयं मन्यामहे ।

मूल-ग्रन्थस्य भाषा यावच्छक्यम् अक्षुण्णा रक्षिता । सुलभतां साधयितुं यत्र-कुत्रचित् ईषत् भाषा-परिवर्तनं कृतम् येन मूल-ग्रन्थस्य भाषास्वादं छात्राः अनुभवेयुः । सरल-सुलभ-भाषया अस्य ग्रन्थस्य संस्कृत-भाषायाः च परिचयः अत्र कारितः । नाम-सर्वनाम-विशेषणादि-शब्द-रूपाणां क्रियारूपाणां च प्राथमिकः परिचयः सुलभ-शब्दरूपावल्याः उपयुक्त-धातुरूप-कोशस्य च द्वारा सञ्जातः एव । व्यवहार-प्रश्नोत्तरीमुखेन किञ्चित् वाक्य-रचने अपि प्रवेशः जातः । तत्र अधिगतस्य ज्ञानस्य उपयोजनम् अस्यां पुस्तिकायां प्राचुर्येण भवेत् । अर्जितं ज्ञानं न तावत् आत्मसात् भवति यावत् तस्य उपयोगः न क्रियते । अतः इयं पुस्तिका तस्य ज्ञानस्य उपयोजने इष्टम् अवसरं ददाति । प्रत्येकस्मिन् पाठे एका मनोहारिणी कथा, तस्याः विषये केचन सुलभ-प्रश्नाः, कठिन-शब्दानाम् अर्थाः च लिखिताः सन्ति । प्रश्नानाम् उत्तराणां च आयोजनं भाषा-व्यवहार-दृष्ट्या नितान्तम् आवश्यकम् । वस्तुतः न कः अपि संस्कृत-भाषा-पाठः पूर्णः स्यात् यावत् प्रश्नोत्तर-रूपेण सः न चर्चितः भवेत् । भाषाभ्यासः भाषा-व्यवहारेण विना सर्वथा अपूर्णः एव स्यात् । अतः शिक्षक-महाभागैः अस्मिन् विशिष्ट-विषये दत्तचित्तैः भाव्यम् । एतासां कथानां पुनः पुनः वाचनेन पुस्तकस्य भाषा छात्रैः आत्मसात् करणीया ।

मन्ये संस्कृत-भाषा-प्रचारि-सभायाः अयम् उपक्रमः छात्राणां शिक्षकाणां विदुषां च सन्तोषाय भवेत् ।

धर्मपीठम्, नागपुरम् १
वर्षप्रतिपदा शके १८७५
दिनाङ्कः १६-३-५३

**स. ना. कुलकर्णी**
प्रमुख-कार्यवाहः
संस्कृत-भाषा-प्रचारिणी सभा

प्रथमं संस्करणम् मार्च १९५३, द्वितीयं संस्करणम् सप्टेंबर १९५५

# १. हंस–काकयोः कथा ।

अस्ति एकः महान् पिप्पलीवृक्षः । तत्र हंस-काकौ निवसतः । एकदा ग्रीष्म-समये परिश्रान्तः कश्चित् पान्थः तत्र तरु-तले धनुःकाण्डं[१] निधाय[२] सुप्तः[३] । शीघ्रम् एव पान्थस्य मुखात् वृक्षच्छाया अपगता[४] । ततः सूर्य-तेजसा तस्य मुखं व्याप्तम्[५] । तत् अवलोक्य वृक्ष-स्थितेन हंसेन आत्म-पक्षौ प्रसार्य[६] पुनः पान्थस्य मुखे छाया कृता । ततः गाढ-निद्रा-सुखात तन पान्थेन मुखम् अपावृतम्[७] । तत् दृष्ट्वा पर-सुखम् असहिष्णुः स्वभाव-दुर्जनः स काकः तस्य पान्थस्य मुखे मल-विसर्जनं कृत्वा पलायितः । ततः यावत् असौ पान्थः उत्थाय[८] ऊर्ध्वं[९] निरीक्षते तावत् तेन अवलोकितः[१०] हंसः काण्डेन हतः च ।

उक्तं हि यथा—

न स्थातव्यं न गन्तव्यं दुर्जनेन समं क्वचित् ।
काक-संगात् हतो हंसः पथिकस्योपकारकः ॥

प्रश्नः—

(१) पिप्पलीवृक्षे कौ निवसतः ?
(२) एकदा तरु-तले कः सुप्तः ?
(३) अनन्तरं तस्य मुखं केन व्याप्तम् ?
(४) तत् दृष्ट्वा हंसेन किं कृतम् ?
(५) काकस्य स्वभावः कीदृशः अस्ति ?
(६) स किं कृत्वा पलायितः ?
(७) कः तस्य परिणामः ?

शब्दार्थाः—

१. धनुष्यबाण = धनुष बाण ।
२. ठेवून = रखकर ।
३. निजला = सो गया ।
४. निघून गेली = चली गई ।
५. व्याप्त झालें = छा गया ।
६. पसरून = फैलाकर ।
७. उघडलें = खोला ।
८. उठून = उठ कर ।
९. वर = ऊपर ।
१०. पाहिला = देखा ।

## २. मूर्ख-बकस्य कथा ।

अस्ति उत्तरापथे गृध्रकूटः नाम पर्वतः तत्र ऐरावती-तीरे वट-वृक्षे बकाः निवसन्ति । तस्य वृक्षस्य अधः विवरे सर्पः तिष्ठति । स च तेषां बालापत्यानि खादति । अथ शोकार्तानां बकानां विलापं श्रुत्वा[१] केनचित् बकेन अभिहितम्[२]—एवं कुरुत यूयम् । कान् अपि मत्स्यान् आनीय नकुल-विवरात् आरभ्य[३] सर्प-विवरं यावत्[४] पङ्क्तिक्रमेण एकैकशः भूमौ स्थापयत । ततः आहार-लुब्धाः नकुलाः मत्स्य-पङ्क्ति-मार्गेण सर्प-विवरम् आगत्य स्वभाव-विद्वेषात् तान् भक्षयिष्यन्ति[५] । तथा अनुष्ठिते[६] तत् वृत्तम्[७] । किन्तु तदा एव वृक्षोपरि वर्तमानानां बक-शावकानां रावं[८] श्रुत्वा नकुलैः वृक्षम् आरुह्य सर्वे बक-शावकाः[९] खादिताः ।

अतः अहं वदामि—

उपायं चिन्तयन् प्राज्ञो ह्यपायमपि चिन्तयेत् ।
पश्यतो बक-मूर्खस्य नकुलैर्भक्षिताः प्रजाः ॥

**प्रश्नाः**—

(१) किं करोति सर्पः ?
(२) किम् अभिहितं केनचित् बकेन ?
(३) तथा अनुष्ठिते किं वृत्तम् ?
(४) किन्तु कः तस्य अपरः परिणामः ?
(५) किं तात्पर्यम् अस्याः कथायाः ?

**शब्दार्थाः**—

१. ऐकून = सुनकर ।
२. म्हटलें = कहा ।
३. पासून = से ।
४. पर्यंत = तक ।
५. खातील = खायेंगे ।
६. केल्यावर = किये जाने पर ।
७. झालें = हुआ ।
८. किलकिलाट = चहचहाट ।
९. पिलें = बच्चे ।

## ३. अति-सञ्चय-शीलः जम्बुकः ।

अस्ति कश्चित् भैरवः नाम व्याधः । स एकदा मृगयां कर्तुं विन्ध्या-वनं गतः । तेन तत्र मृगः हतः । तं गृहीत्वा गच्छन् स मार्गे घोराकृतिं शूकरम्[१] अपश्यत्[२] । ततः तेन व्याधेन मृगः भूमौ स्थापितः शूकरः च शरेण आहतः । शूकरेण अपि घन-घोर-गर्जनं कृत्वा कटि-देशे व्याधः हतः । स भूमौ पतितः । अथ तयोः पादाघातेन कश्चित् सर्पः अपि मृतः ।

अनन्तरं कश्चित् जम्बुकः आहार-प्राप्त्यै परिभ्रमन्[३] तान् मृतान् मृग-व्याध-सर्प-शूकरान् दृष्ट्वा चिन्तयति–"अहो अद्य मे महत् भोजनं प्राप्तम् । एषां मांसैः मास-त्रयं मे सुखेन गमिष्यति[४] । एकं मासं नरः याति, मास-द्वयं मृग-शूकरौ, दिनम् एकं सर्पः च याति । अद्य तु क्षुधा-शमनाय कोदण्डस्य[५] इदं निःस्वादु[६] स्नायु-बन्धनं खादामि" इति विचार्य यदा तेन स्नायु-बन्धनं छिन्नं तदा उत्पतितेन[७] कोदण्डेन हृदये प्रहृतः जम्बुकः तत्काले एव मृतः । उक्तं च—

कर्तव्यः सञ्चयो नित्यं, कर्तव्यो नाति-सञ्चयः ।
पश्य सञ्चयशीलोऽसौ धनुषा जम्बुको हतः ॥

**प्रश्नाः**—

(१) किमर्थं व्याधः विन्ध्या-वनं गतः ?
(२) कथं मृत : सर्पः ?
(३) कान् अपश्यत् जम्बुकः ?
(४) तान् दृष्ट्वा किं चिन्तयति सः ?
(५) कथं मृतः जम्बुकः ?

**शब्दार्थाः**—

१. वराह = वराह । २. पाहिलें = देखा ।
३. भटकत असतां = घूमता हुआ । ४. जाईल = बीतेगा ।
५. धनुष्याचें = धनुष का । ६. बेचव = रुचिहीन ।
७. उडालेल्या = उडे हुए ।

# ४. वानरेभ्यः पक्षिणाम् उपदेशः ।

अस्ति नर्मदा-तीरे विशालः शाल्मली-तरुः[१] । तत्र सुख-निवासार्थं पक्षिभिः नीडाः[२] कृताः । तेषु नीडेषु पक्षिणः वर्षा-काले अपि सुखेन निवसन्ति । अथ एकदा महती जल-वृष्टिः अभवत् । तदा तरु-तले अवस्थितान्[३] शीतेन कम्पमानान्[४] वानरान् अवलोक्य पक्षिभिः करुणया उक्तम्—"भोः वानराः शृणुत । वयं चञ्चु-युक्ताः । अस्माभिः चञ्चुभिः आनीतैः तृणैः नीडाः निर्मिताः । यूयं हस्त-पादादि-युक्ताः स्थ[५] । तत् किम् एवं दुःखं सहध्वे[६] ?"

तत् श्रुत्वा क्रुद्धाः वानराः चिन्तयन्ति—"अहो नीड-स्थिताः खगाः सुखिनः । वृष्टि-वातादिकैः न पीड्यन्ते[७] । अतः अस्मान् निन्दन्ति । तत् वृष्टिः शाम्यतु ।" अनन्तरं यदा जल-वृष्टिः शान्ता अभवत् तदा तैः वानरैः वृक्षम् आरुह्य[८] सर्वे पक्षि-नीडाः भग्नाः, तेषाम् अण्डानि च अधः पातितानि[९] । अतः अहं ब्रवीमि[१०]—

विद्वानेवोपदेष्टव्यो नाविद्वांस्तु कदाचन ।
वानरानुपदिश्याथ स्थानभ्रष्टा ययुः खगाः ॥

**प्रश्नाः—**

(१) पक्षिणः कुत्र सुखेन निवसन्ति ?
(२) शीतेन कम्पमानान् वानरान् अवलोक्य खगैः किम् उक्तम् ?
(३) तत् श्रुत्वा किं चिन्तयन्ति वानराः ?
(४) यदा जलवृष्टिः शान्ता तदा किं कृतं वानरैः ?
(५) किं तात्पर्यम् अस्याः कथायाः ?

**शब्दार्थाः—**

१. सावरी = सेमल ।
२. घरटीं = घोंसले ।
३. बसलेल्या = बैठे हुये ।
४. कांपणाऱ्या = कम्पित ।
५. आहांत = हो ।
६. सहन करतां = सहन करते हो ।
७. त्रास होतो = पीडित होते हैं ।
८. चढ़ून = चढ कर ।
९. पाडलीं = गिरा दी ।
१०. म्हणतों = कहता हूँ ।

# ५. बुद्धिर्यस्य बलं तस्य।

अस्ति मन्दरनाम्नि पर्वते दुर्दान्तः नाम सिंहः। स सर्वदा पशूनां वधं करोति। ततः सर्वैः पशुभिः मिलित्वा सिंहः विज्ञप्तः[१] "मृगेन्द्र, किमर्थम् एकदा एव बहु-पशु-घातः क्रियते। यदि प्रसादः[२] भवति तर्हि वयम् एव प्रत्यहम् एकैकम् पशुं समर्पयामः"। ततः सिंहेन तेषां विज्ञप्तिः अनुमोदिता। तत्-दिनात् प्रभृति एकैकं समर्पितं पशुं सिंहः भक्षयति। अथ एकदा कस्यचित् वृद्ध-शशकस्य वारः[३] समायातः। सः अचिन्तयत्— "मम मरणं यदि निश्चितं तर्हि सिंहस्य संतोषेण किं मे प्रयोजनम्? तत् अहं मन्द मन्दं गच्छामि।" ततः सिंहः अपि क्षुधा-पीडितः तम् अवदत्-"किमर्थं विलम्बेन आगतः असि।" शशकः अब्रवीत्-"देव न अहम् अपराधी। आगच्छन्[४] मार्गे अन्येन सिंहेन अहं बलात् धृतः। तस्य पुरतः पुनर् आगमनाय शपथं कृत्वा स्वामिनं निवेदयितुम्[५] अत्र आगतः अस्मि।" तत् श्रुत्वा क्रुद्धः सिंहः आह-"दर्शय मां क्व स दुरात्मा तिष्ठति।" ततः शशकः तं सिंहं गृहीत्वा गभीर-कूपं[६] दर्शयितुं गतः। "अत्र आगत्य स्वयम्[७] एव पश्यतु स्वामी" इति उक्तः सिंहः तस्मिन् कूप-जले स्वस्य प्रतिबिम्बं दृष्ट्वा महता क्रोधेन गर्वेण च तस्य उपरि आत्मानं निक्षिप्य पञ्चत्वं गतः[८]। अतः अहं ब्रवीमि—

बुद्धिर्यस्य बलं तस्य निर्बुद्धेस्तु कुतो बलम्।
पश्य सिंहो मदोन्मत्तः शशकेन निपातितः[९]॥

प्रश्नाः—

(१) सर्वैः पशभिः मिलित्वा सिंहः किं विज्ञप्तः?
(२) किम् अचिन्तयत् वृद्ध-शशकः?
(३) क्षुधा-पीडितः सिंहः किम् अवदत् शशकम्?
(४) तदा शशकः किम् अब्रवीत्?
(५) सिंहः कथं मृतः?

शब्दार्थाः—

१. विनविल्या गेला = प्रार्थित किया गया। २. कृपा = कृपा।
३. पाळी = बारी। ४. येत असतां = आता हुआ।
५. निवेदन करण्यास=निवेदन करने के लिये। ६. खोल विहीर = गहरी कुँआ।
७. स्वतःच = स्वयं ही। ८. मेला = मर मिटा।
९. नष्ट केला = नष्ट किया।

## ६. नकुल-ब्राह्मणयोः कथा ।

अस्ति उज्जयिन्यां माधवः नाम विप्रः । तस्य भार्या प्रसूता । एकदा सा बालकस्य रक्षणार्थं ब्राह्मणम् अवस्थाप्य[१] स्नानाय नदीं गता । अनन्तरं दक्षिणा-ग्रहणाय ब्राह्मणं राज्ञः निमन्त्रणम् आगतम् । तत् श्रुत्वा सः अचिन्तयत्–"अहं जन्म-दरिद्रः । यदि सत्वरं न गच्छामि, तर्हि[२] अन्यः कश्चित् दक्षिणां ग्रहीष्यति[३] । अतः शीघ्रं गमनं कर्तव्यम् । किन्तु अत्र बालकस्य रक्षार्थं[४] न कः अपि अस्ति । अस्तु । चिर-कालपालितः अयं मे नकुलः[५] । तम् अवस्थाप्य गच्छामि ।" तथा कृत्वा स गतः ।

अनन्तरं बालक-समीपं एकः कृष्ण-सर्पः आगतः । स नकुलेन दृष्टः खण्डितः[६] च । ततः स नकुलः विप्रम् आयान्तम्[७] अवलोक्य सत्वरम् उपगम्य चरणयोः अलुठत्[८] । तेन विप्रेण नकुलस्य मुखं पादाः च रुधिरेण[९] विलिप्ताः[१०] दृष्टाः । ततः बालकः अनेन खादितः इति अनुमानं कृत्वा तेन नकुलः हतः । अनन्तरं यावत् ब्राह्मणः गृहस्य अन्तः अगच्छत् तावत् बालकं सुरक्षितं, सर्पं च हतम् अपश्यत् । ततः स उपकारकः नकुलः मया क्रोधात् व्यर्थम् एव हतः इति ज्ञात्वा ब्राह्मणः मनसि खिन्नः अभवत् । उक्तं च—

सहसा[११] विदधीत न क्रियामविवेकः परमापदां पदम् ।
वृणते[१२] हि विमृश्य-कारिणं[१३] गुण-लुब्धाः स्वयमेव सम्पदः ॥

**प्रश्नाः—**

(१) किमर्थं ब्राह्मणं निमन्त्रणं आगतम् ?
(२) तत् श्रुत्वा स किम् अचिन्तयत् ?
(३) यदा ब्राह्मणः गतः तदा किं जातम् ?
(४) बालकः नकुलेन खादितः इति अनुमानं विप्रेण कुतः कृतम् ?
(५) किं ज्ञात्वा ब्राह्मणः मनसि खिन्नः अभवत् ?

**शब्दार्थाः—**

१. ठेवून = रख कर ।
२. तर = तो ।
३. घेईल = लेगा ।
४. रक्षणासाठीं = रक्षा के लिये ।
५. मुंगूस = न्योला ।
६. तुकडे केले = टुकडे किये ।
७. येत असतां = आते हुये ।
८. लोळूं लागला = लोटने लगा ।
९. रक्तानें = खून से ।
१०. भरलेले = लिपटे हुये ।
११. अविचारानें = अविचार से ।
१२. वरतात = पसन्द करती ।
१३. विचारपूर्वक कृति करणारास = सोचकर करनेवाले को ।

## ७. काक–कृष्ण–सर्पयोः कथा ।

कस्मिंश्चित् तरौ वायस-दम्पती[१] निवसतः । तस्य तरोः कोटरे[२] एकः कृष्ण-सर्पः प्रतिवसति । स वायसयोः अपत्यानि सर्वदा खादति । ततः यदा वायसी पुनः गर्भवती अभवत् तदा वायसम् आह-"नाथ, त्याज्यः अयं तरुः । अत्र यावत्[३] कृष्ण-सर्पः तिष्ठति तावत् आवयोः सन्ततिः कदाचित् अपि न भविष्यति ।" वायसः अब्रवीत्-"प्रिये न भेतव्यम् । वारंवारं मया एतस्य कृष्ण-सर्पस्य महापराधः सोढः[४] । इदानीं पुनः न क्षमिष्ये"[५] । वायसी अपृच्छत्—"बलवान् अयं कृष्ण-सर्पः । तत् कथम् एतेन सह भवान् विग्रहीतुं[६] समर्थः भविष्यति ।" वायसः प्रतिवदति—"अलम् अनया शङ्कया[७] । यतः यस्य बुद्धिः तस्य बलम् । अतः सम्प्रति यत् कर्तव्यं तत् शृणु । अत्र आसन्ने[८] सरसि राजपुत्रः प्रत्यहम् आगत्य स्नाति । स्नान-समये आत्मनः अङ्गात् कनक-सूत्रम् अवतारयति[९] । तत् कनक-सूत्रं चञ्च्वा धृत्वा त्वम् आनय, अस्मिन् तरु-कोटरे स्थापय च ।" अथ अपरे दिने यदा राज-पुत्रः स्नानाय जलं प्रविष्टः तदा वायस्या तत् अनुष्ठितम् । अनन्तरं कनक-सूत्रस्य अन्वेषणाय[१०] आगतैः राज-पुरुषैः तत्र तरु-कोटरे कृष्ण-सर्पः दृष्टः हतः च । उक्तं च—

उपायेन हि यत् शक्यं न तत् शक्यं पराक्रमैः ।
काकः कनक-सूत्रेण कृष्ण-सर्पम् अघातयत् ॥

**प्रश्नाः—**

(१) किं करोति कृष्ण-सर्पः ?
(२) गर्भवती वायसी किम् आह ?
(३) किम् अपृच्छत् वायसी ?
(४) वायसेन कः उपायः कथितः ?
(५) कैः कृष्ण-सर्पः दृष्टः हतः च ?

**शब्दार्थाः—**

१. कावळ्याचें जोडपें = कौओं का जोडा । २. ढोलींत = कोटर में ।
३. जों पर्यंत = जब तक । ४. सहन केला आहे = सहन किया है ।
५. सहन करेन = सहन करूंगा । ६. लढण्यास = लढने के लिये ।
७. ही शंका घेऊं नकोस=यह शंका मत लो । ८. जवळच्या = समीप के ।
९. काढून ठेवील = उतारेगा । १०. शोधण्यास = खोजनेके लिये ।

## ८. घण्टाकर्णः राक्षसः ।

अस्ति श्री-पर्वत-मध्ये ब्रह्मपुरम् नाम नगरम् । तत्पर्वत-शिखरे घण्टाकर्णः नाम राक्षसः प्रतिवसति इति जनाः वदन्ति एकदा घण्टां गृहीत्वा पलायमानः कश्चित् चोरः व्याघ्रेण हतः । तस्य हस्तात् पतिता घण्टा वानरैः प्राप्ता । तां घण्टां वानराः प्रतिक्षणं वादयन्ति[१] । अनन्तरं नगरजनैः स मनुष्यः खादितः दृष्टः, प्रतिक्षणं घण्टा-नादः च श्रुतः । अथ घण्टाकर्णः कुपितः[२] मनुष्यान् खादति घण्टां च वादयति इति मनसि निश्चित्य सर्वे जनाः नगरात् पलायिताः ।

ततः कराला नाम काचित्[३] स्त्री मनसि अचिन्तयत्—"घण्टा-वादस्य कालः अनियतः[४] । तत् किं वानराः घण्टां वादयन्ति"—इति विचिन्त्य स्वयं च विज्ञाय[५] राजानं व्यज्ञापयत्[६] "देव यदि कियत्-धन-व्ययः[७] क्रियते तर्हि एनं घण्टाकर्णं साधयामि[८]" । ततः राज्ञा तस्यै धनं दत्तम् । कराला च जनानां पुरतः मण्डलं कृत्वा गणेशादि-पूजा-गौरवम्[९] अदर्शयत्, वानर-प्रिय-फलानि गृहीत्वा वनं प्रविश्य फलानि आकिरत्[१०] च । ततः घण्टां परित्यज्य वानराः फलासक्ताः अभवन्, कराला च घण्टां गृहीत्वा नगरम् आगता सर्व-जन-पूज्या च अभवत् । उक्तं च—

शब्दमात्रान्न भेतव्यं न ज्ञात्वा शब्द-कारणम् ।
शब्द-हेतुं परिज्ञाय 'कराला' गौरवं गता ॥

**प्रश्नाः—**

(१) जनाः किं वदन्ति ?
(२) किं मनसि निश्चित्य जनाः नगरात् पलायिताः ?
(३) किं मनसि अचिन्तयत् कराला ?
(४) केन उपायेन घण्टां गृहीत्वा कराला नगरम् आगता ?
(५) किं तात्पर्यम् अस्याः कथायाः ?

**शब्दार्थाः—**

१. वाजवीत असत = बजाते थे ।
२. रागावला = क्रुद्ध हो गया ।
३. कोणी एक = कोई एक ।
४. अनियमित = अनियमित ।
५. जाणून = जान कर ।
६. विनंति केली = प्रार्थना की ।
७. कांही द्रव्याचा खर्च=कुछ द्रव्य का व्यय ।
८. कह्यांत आणीन = वश में लाऊंगी ।
९. अवडम्बर = आडम्बर ।
१०. पसरून दिली = फैला दिये ।

# ९. पराधिकार-चर्चा न कर्तव्या ।

अस्ति वाराणस्यां कर्पूर-पटकः नाम रजकः[१] । स एकदा प्रसुप्तः[२] । तदनन्तरं तद्-गृह-द्रव्यं हर्तुं चौरः प्रविष्टः । गृहस्य प्राङ्गणे[३] गर्दभः बद्धः तिष्ठति कुक्कुरः[४] च उपविष्टः अस्ति । अथ गर्दभः श्वानम् अवदत्–" सखे, भवतः अयं व्यापारः[५] । तत् किमिति त्वम् उच्चैः शब्दं कृत्वा स्वामिनं न जागरयसि ?" कुक्कुरः प्राह—"मित्र, मम अधिकारस्य चर्चा त्वया न कर्तव्या । त्वम् एव किं न जानासि यत् स्वामिनः गृहम् अहम् अहर्निशं रक्षामि । किन्तु सम्प्रति मम आहार-दाने तस्य आदरः क्षीणः । यतः सङ्कटस्य अभावात् स्वामिनां भृत्येषु[६] आदरः क्षीणः भवति ।"

तत् श्रुत्वा क्रुद्धः गर्दभः अवदत्—"रे मूढ दुष्टमते, पापी त्वम्, यतः सङ्कटे स्वामि-कार्यस्य उपेक्षां करोषि । भवतु । अहम् एव स्वामिनं जागरयामि" । इति उक्त्वा तेन उच्चैः चीत्कार-शब्दः[७] कृतः । ततः तेन चीत्कार-शब्देन रजकः प्रबुद्धः[८] अभवत् । निद्रा-भङ्ग-कोपेन च तेन रजकेन गर्दभः लगुडेन[९] ताडितः । अतः अहं ब्रवीमि—

पराधिकार-चर्चां यः कुर्यात् स्वामि-हितेच्छया ।
स विषीदति चीत्कारात् गर्दभस्ताडितो यथा ॥

**प्रश्नाः—**

(१) किम् अवदत् गर्दभः श्वानम् ?
(२) किम् प्राह कुक्कुरः ?
(३) तदा गर्दभेन किं कृतम् ?
(४) कः परिणामः तस्य ?
(५) कः बोधः अस्याः कथायाः ?

**शब्दार्थाः—**

१. धोबी = धोबी ।
२. झोंपला = सोया ।
३. अंगणांत = आंगन में ।
४. कुत्रा = कुत्ता ।
५. कार्य = कर्तव्य ।
६. नोकराच्या विषयीं = सेवकों के सम्बन्ध में ।
७. गर्दभ-नाद = गधेका रेकना ।
८. जागा = जागृत ।
९. सोटयानें = डण्डे से ।

# १०. त्रयाणां धूर्तानां कथा।

अस्ति प्रस्तुतयज्ञः नाम ब्राह्मणः। एकदा ग्रामान्तरं[१] गत्वा यज्ञार्थं[२] छागं[३] क्रीत्वा, तं च स्कन्धे धृत्वा मार्गेण गच्छन् स धूर्त-त्रयेण दृष्टः। तदा तैः चिन्तितम्—"यदि केन अपि उपायेन एष छागः अस्माभिः लभ्यते तदा मति-प्रकर्षः[४] भवति।" अथ तदनुसारेण ते त्रयः अपि वृक्ष-त्रय-तले क्रोशान्तरेण विप्रागमनं प्रतीक्ष्य[५] मार्गे स्थिताः।

अनन्तरं स्कन्ध-धृत-पशुं तं विप्रम् दृष्ट्वा एकः धूर्तः वदति—"भोः ब्राह्मण, किमिति सारमेयं[६] स्कन्धेन वहसि?।" विप्रेण उक्तम्—"न अयं सारमेयः किन्तु यज्ञीयः छागः।" अथ अनन्तर-स्थितेन धूर्तेन तथा एव उक्तम्। तत् श्रुत्वा स ब्राह्मणः छागं भू-पृष्ठे अवतार्य[७] पुनः निरीक्ष्य पुनः स्कन्धे कृत्वा अस्थिर-मतिः चलितः। न यावत् स किञ्चित् अन्तरं गच्छति तावत् एव तृतीयः वञ्चकः अभिमुखम्[८] आगत्य तथा एव वदति। तत् च आकर्ण्य[९] स्व-मति-भ्रमं निश्चित्य छागं त्यक्त्वा स विप्रः स्नानं च कृत्वा गृहं न्यवर्तत, धूर्ताः तु छागं नीत्वा भक्षितवन्तः। उक्तं च यथा—

आत्म-साम्येन यो वेत्ति दुर्जनं सत्यवादिनम्।
स तथा वञ्च्यते धूर्तैः ब्राह्मणश्छागतो यथा॥

**प्रश्ना :—**

(१) कीदृशः विप्रः धूर्त-त्रयेण दृष्टः ?
(२) किं चिन्तितं तदा तैः धूर्तैः ?
(३) कुत्र स्थिता ते त्रयः धूर्ताः ?
(४) द्वितीय-धूर्त-वचनं श्रुत्वा विप्रः किं करोति ?
(५) कः परिणामः भवति तृतीय-धूर्त-वचनस्य ?

**शब्दार्थाः—**

१. दुसऱ्या गांवास = दूसरे गांव को।
२. यज्ञासाठीं = यज्ञ के लिए।
३. कोंकरूं = मेमना।
४. बुद्धिविकास = बुद्धिविकास।
५. वाट पहात = राह देखते।
६. कुत्रा = कुत्ता।
७. खाली उतरवून = नीचे उतार कर।
८. समोर = सामने।
९. ऐकून = सुन कर।

# ११. टिट्टिभ-समुद्रयोः कथा।

दक्षिण-समुद्र-तीरे टिट्टिभ-मिथुनं[१] निवसति स्म। एकदा आसन्न-प्रसवा[२] टिट्टिभी भर्तारम् आह "नाथ, समुद्र-वेलया[३] प्लाव्यते[४] स्थानम् एतत्। अतः न प्रसूति-योग्यम्। टिट्टिभः अवदत्—"किम् अहं निर्बलः येन स्व-गृहावस्थितः समुद्रेण दण्डयितव्यः"। टिट्टिभी विहस्य[५] प्राह-"स्वामिन् त्वया समुद्रेण च महत् अन्तरम्।"

ततः स्वामि-वचनात् तत्र एव प्रसूता सा। एतत् सर्वं श्रुत्वा समुद्रेण तस्य शक्ति-ज्ञानार्थम् अण्डानि अपहृतानि। तदा शोकार्ता टिट्टिभी विलापम् अकरोत्। ततः टिट्टिभः ब्रूते-"प्रिये, मा विलप। अहम् उपायं करोमि। इति उक्त्वा खगानां संमेलनं कृत्वा खग-नायक-गरुड-समीपं गत्वा सकल-वृत्तान्तः तेन तस्मै निवेदितः। गरुडेन च सकल-सृष्टि-नियामकः भगवान् नारायणः प्रार्थितः। स समुद्रम् अण्ड-दानाय आदिष्टवान्[६]। भगवदाज्ञां शिरसि कृत्वा समुद्रेण तानि अण्डानि टिट्टिभाय समर्पितानि। अतः अहं ब्रवीमि—

कस्यायम् इति न ज्ञात्वा कथं सामर्थ्य-निर्णयः।
पश्य टिट्टिभमात्रेण समुद्रो व्याकुलीकृतः[७]॥

**प्रश्नाः—**

(१) किम् आह भर्तारम् आसन्न-प्रसवा टिट्टिभी ?
(२) तदा किम् अवदत् टिट्टिभः ?
(३) किं कृतं समुद्रेण ?
(४) टिट्टिभेन कः उपायः अवलम्बितः ?
(५) किमर्थं समर्पितानि अण्डानि समुद्रेण टिट्टिभाय ?

**शब्दार्थाः—**

१. टिटवीचें जोडपें = टिटहरीका जोडा।
२. प्रसूति-काल येऊन ठेपलेली = प्रसूति-समय आ पहुँची।
३. समुद्राच्या लाटेनें = समुद्र के तरंग से।
४. जलमय केल्या जाते = जलमय किया जाता है।
५. हंसून = हँस कर।
६. आज्ञा केली = आज्ञा की।
७. व्याकुळ केला = व्याकुल किया।

# १२. पर-पक्ष-रतः शृगालः ।

एकदा कश्चित् शृगालः नीली-भाण्डे पतितः। कथम् अपि तस्मात् निर्गत्य आत्मानं नील-वर्णं दृष्ट्वा सः अचिन्तयत्—"अहम् इदानीम् उत्तम-वर्णः । तदा अहं स्वकीयोत्कर्षं किं न साधयामि ?" । अथ वनं प्राप्य स स्वबान्धवान् अवदत्—"भगवतया वन-देवतया स्व-हस्तेन अरण्य-राज्ये सर्वौषधि-रसेन अहम् अभिषिक्तः । तत् अतः परम् अस्मदाज्ञया राज्य-व्यवहारः कार्यः ।" शृगालैः विशिष्ट-वर्णं तम् अवलोक्य तस्य आज्ञा शिरसि कृता[1] ।

अनेन एव क्रमेण बन्धु-साहाय्येन सर्वेषु अरण्य-वासिषु प्राणिषु तस्य आधिपत्यम्[2] अभवत्। व्याघ्र-सिंहादयः तस्य परिजनाः[3] जाताः। अथ स राज-सभायां शृगालान् अवलोक्य लज्जमानः भवति। अतः तेन अवज्ञां कृत्वा दूरीकृताः स्व-ज्ञातयः[4] । ततः विषण्णान्[5] शृगालान् अवलोक्य केनचित् वृद्ध-शृगालेन अभिहितम्—"यथा अयं नश्यति तथा क्रियताम्। अस्य विशिष्ट-वर्णेन विप्रलब्धाः[6] व्याघ्रादयः इमं राजानं मन्यन्ते। तत् यथा अयं सत्य-रूपेण परिचितः भवति तथा कुरुत" । अनन्तरं यदा तैः सन्ध्या-समये महा-शब्दः कृतः तदा जाति-स्वभावात् तेन अपि तादृशः शब्दः कृतः । व्याघ्रेण तत्-स्वरूपं ज्ञात्वा[7] स हतः च ।

प्रश्नाः—

(१) कुतः शृगालः नीलवर्णः जातः ?
(२) किम् अवदत् स स्व-बान्धवान् ?
(३) कुतः तेन दूरीकृताः स्व-ज्ञातयः ?
(४) किम् अभिहितं वृद्ध-शृगालेन ?
(५) कदा स व्याघ्रेण हतः ?

शब्दार्थाः—

१. मानली = मान ली । २. सत्ता = शासन ।
३. सेवक = सेवक । ४. नातलग = स्वजन ।
५. खिन्न = दुःखी । ६. फसलेले = वञ्चित ।
७. जाणून = जान कर ।

# १३. काष्ठ-भ्रष्टः कूर्मः ।

अस्ति मगध-देशे फुल्लोत्पलं नाम सरः । तत्र हंसौ निवसतः । तयोः मित्रं कूर्मः[१] अपि तत्र एव न्यवसत् । एकदा धीवरैः तत्र आगत्य उक्तम्--"अद्य अत्र उषित्वा[२] प्रातः मत्स्य-कूर्मादयः हन्तव्याः"। "तद् आकर्ण्य कूर्मः आह–"सुहृदौ, श्रुतः अयं धीवरालापः[३] ? अद्य एव मया अपरं तडागं[४] गन्तव्यम् । हंसौ पृच्छतः–"स्थले कथं चलसि ?" कच्छपः अवदत्–"युवाभ्यां चञ्चु-धृतं काष्ठ-खण्डम् एकम् अवलम्ब्य[५] आकाश-मार्गेण मया गन्तव्यम्, न च स्थल-मार्गेण" । हंसौ आहतु[६]:–"भवतु । परं तादृशं त्वां दृष्ट्वा जनैः किञ्चिद् अपि वक्तव्यम् एव । तदा उत्तरं मा देहि, अन्यथा तव मरणं निश्चितम् ।" कच्छपः ब्रूते "किम् अहम् अज्ञः ? न किम् अपि वदामि ।"

ततः तथा अनुष्ठिते तथाविधं कूर्मम् अवलोक्य सर्वे गोरक्षकाः पश्चात् धावन्ति । तत्र कः अपि प्राह "यदि अयं कूर्मः पतति तदा अत्र एव पक्त्वा[७] खादितव्यः" । अन्यः वदति-"दग्ध्वा[८] खादितव्यः" । एतत् श्रुत्वा कोपाविष्टः कूर्मः ब्रूते–"युष्माभिः भस्म भक्षयितव्यम्" । इति वदन् एव पतितः, गोरक्षकैः व्यापादितः च । अतः अहं ब्रवीमि—

सुहृदां हितकामानां यो वाक्यं नाभिनन्दति[९] ।
स कूर्म इव दुर्बुद्धिः काष्ठात् भ्रष्टो विनश्यति ॥

**प्रश्नाः**—

(१) कूर्मः अपरं तडागं गन्तुं कथं प्रस्थितः ?
(२) हंसाभ्यां कूर्माय का सूचना दत्ता ?
(३) तथाविधं कूर्मं दृष्ट्वा गोरक्षकाः किम् अवदन् ?
(४) तत् श्रुत्वा कूर्मः किं ब्रूते ?
(५) तस्य वचनस्य कः परिणामः ?

**शब्दार्थाः**—

१. कांसव = कछुवा ।
२. राहून = रह कर ।
३. कोळयांचे संभाषण = धीवरों की बातचीत ।
४. सरोवर = तालाव ।
५. धरून = पकड कर ।
६. म्हणाले = बोले ।
७. शिजवून = पका कर ।
८. भाजून = भूंज कर ।
९. मान देत नाहीं = मानता नहो ।

---

संस्कृत-भाषा-प्रचारि-सभायाः

# मौखिक-संस्कृत-परीक्षाः

संस्कृत-भाषाप्रचारि-सभायाः निम्न-लिखित-मौखिक-परीक्षाः प्रतिवर्षं भविष्यन्ति। एताः सर्वाः परीक्षाः मौखिक्यः एव वर्तन्ते। परीक्षाः प्रतिवर्षं द्विवारं ख्रिस्ताब्दस्य प्रथमे मासि अष्टमे मासि च (एवं हेमन्ततौ वर्षर्तौ च) भविष्यन्ति। द्वयोःपरीक्षयोः मध्ये भवेत् षण्मासानाम् अन्तरम्। नागपुर-स्थाः नागपुरात् बहिःस्थाः च परीक्षार्थिनःबालक-बालिकाःच परीक्षार्हाः भवेयुः। परीक्षा-शुल्कं प्रतिच्छात्रं चतुराणकं केवलम्। यदि दशसंख्याधिकाः परीक्षार्थिनः आवेदन-पत्रं सर्वकार-मान्य-विद्यालयस्य मुख्याध्यापकद्वारा प्रेषयिष्यन्ति तर्हि परीक्षा-केन्द्रस्य आयोजनं मुख्याध्यापक-महाभागस्य सहकार्येण कर्तुं शक्यते। आवेदन-पत्राणि परीक्षाशुल्केन सह परीक्षा-मासस्य मासपूर्वं प्रेषणीयानि। आवेदन-पत्रे परीक्षार्थिनः नाम, पितुः नाम, कुल-नाम, वयः, पाठशालां, निवास-स्थानं, केन्द्र-नाम, पूर्वोत्तीर्णपरीक्षायाः परीक्षार्थ्यनुक्रमाङ्कं च लिखन्तु। परीक्षोत्तीर्णच्छात्रेभ्यः प्रमाण-पत्राणि प्रदीयन्ते यथासमयम्। श्रेणिगुणानां प्रतिशतता अधोलिखिता भवेत्—

| | |
|---|---|
| प्रथम-श्रेणिः | ८०-१०० |
| द्वितीय-श्रेणिः | ६०-७९ |
| तृतीय-श्रेणिः | ४०-५९ |
| प्रावीण्यम् | ९०-१०० |

एतासां परीक्षाणां नामानि पाठ्य-क्रमः पुस्तक-नामानि च अधः लिख्यन्ते। पाठ्यक्रमान्तर्गतानां द्वादश-पाठ्य-पुस्तिकानां मूल्यम् आणक-द्वयं प्रत्येकम्।

**प्रथम-परीक्षा-**

१. बालामृत-शतश्लोकी
२. सुलभ-शब्द-रूपावलिः
३. व्यवहार-प्रश्नोत्तरी

**द्वितीय-परीक्षा-**

४. उपयुक्त-धातुरूपावलिः
५. हितोपदेश-कथाः
६. संक्षिप्तामरकोशः

प्रथम-परीक्षायाः पाठ्यक्रमः च।

**तृतीय-परीक्षा-**

७. छात्रामृत-शतश्लोकी
८. रामायण-कथा
९. व्यवहार-सूक्तावलिः

द्वितीय-परीक्षायाः पाठ्य-क्रमः च।

**संस्कृत-प्रवेश-परीक्षा-**

१०. महाभारत-कथाः
११. नाट्य-प्रवेशः
१२. कौमुदी-प्रवेशः

तृतीय-परीक्षायाः पाठ्य-क्रमः च।

धर्मपीठम्
नागपुरम् १

स. ना. कुलकर्णी
सं. भा. प्र. सभायाः
प्रमुख-कार्यवाहः



इयं पुस्तिका वर्धानगरस्थ-राष्ट्रभाषा-प्रचार-समितेः मुद्रणालये मुद्रिता नागपुरस्थ-संस्कृत-भाषा-प्रचारि-सभा-द्वारा प्रमुख-कार्यवाहेन धर्मपीठे कुलकर्णी-भवने प्रकाशतां च नीता।

संस्कृत-भाषा-प्रचार-वाङ्मयमाला

# संक्षिप्तामरकोशः

[बालानां कृते]



श्रीमतां मोर-कुलावतंसानां
नरसिंगदास - महाभागानां
दानानुग्रह-फलम् इदम्।



संकलयिता—स. ना. कुलकर्णी





षष्ठ-पुष्पम् ] १९५४ [ मूल्यम् आणक-द्वयम्

# हृद्गतम् ।

स्वविचारान् व्यक्तीकर्तुं शब्दानां समृद्धिः कथम् उपकारिणी भवति इति तु सर्वेषां भाषाकोविदानां सुपरिचितम् । वस्तुतः शब्दः एव विचारस्य मूर्तं स्वरूपम् । शब्देन विना न कः अपि विचारः मनःसम्भूतः अपि, परेषां श्रवण-गोचरः भवेत् । शब्दः वै विचारस्य वपुः । अशरीरः विचारः शब्देन एव शरीरीभवेत् । अतः यस्य विपुला शब्द-समृद्धिः सः एव स्वविचारान् यथार्थतया परेषां स्पष्टान् कर्तुं प्रभवति । शब्दभाण्डारं हि शस्त्रागारम् इव स्वस्वामिनं सभा-समरे बलशालिनं कर्तुं पारयति । यथासमयं यदृच्छया ये शब्दाः श्रवणपथं वाचनपथं वा आगच्छन्ति तान् तु नरः आत्मसात्करोति एव । परम् अत्र भवेत् कालापव्ययः तथा अनिश्चितता च । शब्दानां यदृच्छागमात् प्रयत्नपूर्वकं पठनं निःसंशयं श्रेयस्करम् । अनेन कालक्षेपस्य निवारणम् इष्ट-शब्दजातस्य च उपलब्धिः भवेत् । अनेन एव क्रमेण पुरा बाल्ये वयसि अमरकोशादि-शब्दकोशान् कण्ठस्थीकृत्य अल्पे वयसि एव शब्देश्वराः सञ्जाताः बहु-कुमाराः । तत् कथं न इमाम् इष्टां परम्पराम् अनुसरामः वयम् अस्मत्पुत्र-पौत्र-प्रपौत्राणां विषये ?

अस्यां पुस्तिकायां स्थलाभावात् न उद्धृताः सर्वे शब्दाः येषाम् अन्तर्भावः आवश्यकः । इयं पुस्तिका न स्वयंपूर्णा । सम्पूर्णता न विद्यते अस्माकं ध्येयम् एतासां स्वल्पमूल्य-पुस्तिकानां निर्माणे । बहूपयुक्तस्य प्रसिद्धामरकोशस्य परिचयः केवलं दीयते । परन्तु येषां येषां शब्दानाम् अन्तर्भावः अत्र कृतः ते ते शब्दाः नित्यव्यवहारे भृशम् उपयोगिनः । अन्यच्च बालमनोरचना गुरुग्रन्थं शास्त्रीयम् अपि न सहते । तत् किमर्थं वृथा परिश्रमः क्रियेत । अतः यत् अल्पं तदपि बहु मन्यामहे ।

अस्यां पुस्तिकायां श्लोकान्तर्गतानां शब्दानाम् अर्थः दक्षिण-पार्श्वे हिन्दी-भाषायां मराठी-भाषायां च दत्तः । श्लोकार्थस्थानां तत्तच्छब्दानां संख्याङ्कः अर्थस्य पुरतः स्थापितः । अमरकोश-श्लोक-संख्यानुक्रमः न दत्तः, पुस्तिका-श्लोकानुक्रमः तु वामतः प्रदर्शितः । क्वचित् अमरकोशस्य श्लोकार्धाः केवलम् उद्धृताः । अमरकोश-श्लोकानाम् एवंभूतं विशसनम् न अस्माकं सम्मतम् । परं स्थलाभावात् केषांचित् अत्युपयुक्त-श्लोकार्धानां संग्रहः विश्लिष्टः अपि उचितः इति हेतोः पृथक्करणं समाश्रितम् । अन्ते महत्त्वपूर्ण-शब्दानां वर्णानुक्रमतः सूचिः दत्ता यस्यां नानाजातिसंग्राहकाः शब्दाः स्थूल-टङ्केन प्रदर्शिताः । अङ्काः तु श्लोकानुक्रमाङ्कान् दर्शयन्ति ।

इमां पुस्तिकां बालानां करे संस्थाप्य तेषां शब्द-सम्पत्तेः संवर्धनं च कृत्वा पितृभिः पितामहैः शिक्षकैः च संस्कृत-भाषा-प्रचाराय सहकार्यं देयम् इति संप्रार्थ्य सप्रश्रयं विरम्यते ।

धर्मपीठम्, नागपुरम् १
संक्रान्तिः शके १८७५
दिनाङ्कः

स. ना. कुलकर्णी
प्रमुख-कार्यवाह :
संस्कृत-भाषा-प्रचारिणी सभा

# संक्षिप्तामरकोशः

परिभाषा—

१ प्रायशो रूप-भेदेन साहचर्याच्च कुत्रचित् ।
स्त्री पुंनपुंसकं ज्ञेयं तद्विशेष-विधेः क्वचित् ॥
२ भेदाख्यानाय न द्वन्द्वो नैकशेषो न सङ्करः ।
कृतोऽत्र भिन्न-लिङ्गानामनुक्तानां क्रमादृते ॥
३ त्रिलिङ्ग्यां त्रिष्विति पदं मिथुने तु द्वयोरिति ।
निषिद्धलिङ्गं शेषार्थं त्वन्ताथादि न पूर्वभाक् ॥

प्रथमं काण्डम्—स्वर्वर्गः १ ।

४ स्वरव्ययं स्वर्ग-नाक-त्रिदिव-त्रिदशालयाः । — स्वर्ग ६
सुरलोको द्यो-दिवौ द्वे स्त्रियां क्लीबे त्रिविष्टपम् ॥ — स्वर्ग ४
५ अमरा निर्जरा देवास्त्रिदशा विबुधाः सुराः । — देव ६
सुपर्वाणः सुमनसस्त्रिदिवेशा दिवौकसः ॥ — देव ४
६ विद्याधराप्सरो-यक्ष-रक्षो-गन्धर्व-किन्नराः । — देवयोनि १०
पिशाचो गुह्यकः सिद्धो भूतोऽमी देवयोनयः ॥
७ असुरा दैत्य-दैतेय-दनुजेन्द्रारि-दानवाः । — असुर ६
अप्येकदन्त-हेरम्ब-लम्बोदर-गजाननाः ॥ — गणेश ४
८ धाताऽब्जयोनिर्द्रुहिणो विरिञ्चिः कमलासनः । — ब्रह्मा ५
स्रष्टा प्रजापतिर्वेधा विधाता विश्वसृड्विधिः ॥ — ब्रह्मा ६
९ लक्ष्मीः पद्मालया पद्मा कमला श्रीर्हरिप्रिया । — लक्ष्मी ६
इन्दिरा लोकमाता मा क्षीरोदतनया रमा ॥ — लक्ष्मी ५
१० शंभुरीशः पशुपतिः शिवः शूली महेश्वरः । — शंकर ६
ईश्वरः शर्व ईशानः शंकरश्चन्द्रशेखरः ॥ — महादेव ५
११ शिवा भवानी रुद्राणी शर्वाणी सर्वमङ्गला । — पार्वती ५
अपर्णा पार्वती दुर्गा मृडानी चण्डिकाम्बिका ॥ — पार्वती ६

प्रथमं काण्डम्—व्योम-वर्गः २ ।

१२ द्यो-दिवौ द्वे स्त्रियामभ्रं व्योम पुष्करमम्बरम् । — आकाश ६
नभोऽन्तरीक्षं गगनमनन्तं सुरवर्त्म खम् ॥ — आकाश ६

प्रथमं काण्डम्—दिग्वर्गः ३।

१३ दिशस्तु ककुभः काष्ठा आशाश्च हरितश्च ताः। दिशा ५
प्राच्यवाची-प्रतीच्यस्ताः पूर्व पश्चिम-दक्षिणाः॥ पूर्व २, पश्चिम २, दक्षिण २
१४ धाराधरो जलधरस्तडित्वान्वारिदोऽम्बुभृत्। मेघ ५
घन-जीमूत-मुदिर-जलमुग्धूमयोनयः॥ मघ ५
१५ कादम्बिनी मेघमाला त्रिषु मेघभवेऽभ्रियम्। मेघपंक्ति ४
स्तनितं गर्जितं मेघनिर्घोषे रसितादि च॥ मेघगर्जना ४
१६ शंपा-शतह्रदा-ह्रादिन्यैरावत्यः क्षणप्रभा। विद्युत् ५
तडित्सौदामनी विद्युच्चञ्चला चपला अपि॥ विद्युत् ५
१७ वृष्टिर्वर्षं तद्विघातेऽवग्राहावग्रहौ समौ। वृष्टि २, अवर्षण २
धारा-सम्पात आसारः शीकरोऽम्बुकणाः स्मृताः॥ निरंतर वृष्टि२, तुषार२
१८ वर्षोपलस्तु करका मेघच्छन्नेऽह्नि दुर्दिनम्। गार-ओला २, दुर्दिन १
किरणोऽस्र-मयूखांशु-गभस्ति-घृणि-रश्मयः॥ किरण ७
१९ कला तु षोडशो भागो बिम्बोऽस्त्री मण्डलं त्रिषु। कला १, बिम्ब २
हिमांशुश्चन्द्रमाश्चन्द्र इन्दुः कुमुदबान्धवः॥ चंद्र ५
२० विधुः सुधांशुः शुभ्रांशुरोषधीशो निशापतिः। चन्द्र ५
अब्जो जैवातृकः सोमो ग्लौर्मृगाङ्कः कलानिधिः॥ चन्द्र ६
२१ भित्तं शकल-खण्डे वा पुंस्यर्धोऽर्धं समेंऽशके। तुकडा-टुकडा ४
चन्द्रिका कौमुदी ज्योत्स्ना, प्रसादस्तु प्रसन्नता॥ चांदणें-चांदनी ३ निर्मलता२
२२ अवश्यायस्तु नीहारस्तुषारस्तुहिनं हिमम्॥ दंव-ओस२, थंडी-जाड़ा बर्फ३
प्रालेयं मिहिका चाथ हिमानी हिमसंहतिः। घन बर्फ२, विरल बर्फ२

प्रथमं काण्डम्—कालवर्गः ४।

२३ घस्रो दिनाहनी वा तु क्लीबे दिवस-वासरौ॥ दिवस ५ [ चांदनी-रात्र
तमिस्रा तामसी रात्रिर्ज्यौत्स्नी चन्द्रिकयान्विता। अंधारी-अंधेरी रात्र १,
२४ प्रभातं च दिनान्ते, तु सायं संध्या पितृप्रसूः॥ प्रभात १, संध्याकाल ३
प्राह्णापराह्णमध्याह्नास्त्रिसन्ध्यमथ शर्वरी। सवेरा१, दोपहर१, मध्याह्न १, रात्रि १
२५ निशा निशीथिनी रात्रिस्त्रियामा क्षणदा क्षपा॥ रात्र-निशा ६
विभावरी-तमस्विन्यौ रजनी यामिनी तमी। रात्र-निशा ५
२६ निदाघ उष्णोपगम उष्ण ऊष्मागमस्तपः॥ उन्हाळा-धूपकाल ५
स्त्रियां प्रावृट् स्त्रियां भूम्नि वर्षा अथ शरत् स्त्रियाम्। पावसाळा-वर्षाकाल ३

२७ संवत्सरो वत्सरोऽब्दो हायनोऽस्त्री शरत्समाः । वर्ष ६
दैवं दिष्टं भागधेयं भाग्यं स्त्री नियतिर्विधिः ॥ दैव ६

प्रथमं काण्डम्—धीवर्गः ५ ।

२८ बुद्धिर्मनीषा धिषणा धीः प्रज्ञा शेमुषी मतिः । बुद्धि ७
प्रेक्षोपलब्धिश्चित्संवित्प्रतिपज्ज्ञप्ति-चेतनाः ॥ बुद्धि ७ [कटु १
२९ तुवरस्तु कषायोऽस्त्री मधुरो लवणः कटुः । तुरट कषाय २, मधुर १, लवण १
तिक्तोऽम्लश्च रसाः पुंसि तद्वत्सु षडमी त्रिषु ॥ तिक्त १, अम्ल १ [सुवास १
३० विमर्दोत्थे परिमलो, गन्धे जनमनोहरे । घर्षणोत्थ सुवास १, आह्लादकारक
आमोदः सोऽतिनिर्हारी वाच्यलिंगत्वमागुणात् ॥ समाकर्षक सुवास १
३१ समाकर्षी तु निर्हारी, सुरभिर्घ्राणतर्पणः । दूरगामी सुवास २, सुवास २
इष्टगन्धः सुगन्धिः स्यादामोदी मुखवासनः ॥ सुवास २, ताम्बूलादि सुवास २
३२ पूतिगन्धिस्तु दुर्गन्धो, विस्रं स्यादामगन्धि यत् । दुर्गन्ध २, अपक्व मांस
शुक्ल-शुभ्र-शुचि-श्वेत-विशद-श्वेत-पाण्डराः ॥ पांढरा-श्वेत ७ [दुर्गंध
३३ अवदातः सितो गौरोऽवलक्षो धवलोऽर्जुनः । पांढरा-श्वेत ६
हरिणः पाण्डुरः पाण्डुरीषत्पाण्डुस्तु धूसरः ॥ श्वेत ३, अल्प श्वेत २
३४ कृष्णे नीलासित-श्याम-काल-श्यामल-मेचकाः । काळा-काला ७
पीतो गौरो हरिद्राभः, पालाशो हरितो हरित् ॥ पीत ३, हिरवा-हरा ३
३५ रोहितो लोहितो रक्तः, शोणः कोकनदच्छविः । लाल ३, कमलरक्त १
अव्यक्तरागस्त्वरुणः, श्वेतरक्तस्तु पाटलः ॥ थोडा लाल १, गुलाबी १
३६ श्यावः स्यात्कपिशो, धूम्रधूमलौ कृष्णलोहिते । धूसर अरुण २, जांभळा २
कडारः कपिलः पिङ्ग-पिशङ्गौ कद्रु-पिङ्गलौ ॥ पिंगट-पिंगल ६
३७ चित्रं किर्मीर-कल्माष-शबलैताश्च कर्बुरे । चित्रविचित्र वर्ण ६
गुणे शुक्लादयः पुंसि गुणिलिङ्गास्तु तद्वति ॥

प्रथमं काण्डम्—शब्दादि-वर्गः ६ ।

३८ ब्राह्मी तु भारती भाषा गीर्वाग्वाणी सरस्वती । भाषा ७
व्याहार उक्तिर्लपितं भाषितं वचनं वचः ॥ भाषण ७
३९ समस्या तु समासार्था, किंवदन्ती जनश्रुतिः । श्लोकांश-पूरकचरण १ लोकवार्ता २
वार्ता प्रवृत्तिर्वृत्तान्त उदन्तः, स्यादथाह्वयः ॥ वार्ता ४, नांव-नाम १
४० आख्याह्वेऽभिधानं च नामधेयं च नाम च । नांव-नाम ९
हूतिराकारणाह्वानं संहूतिर्बहुभिः कृता ॥ बोलावणें-बुलाना ४

४१ विवादो व्यवहारः स्यादुपन्यासस्तु वाङ्मुखम्। फिर्याद २, भाषणारंभ २
उपोद्घात उदाहारः, शपनं शपथः पुमान्॥ प्रस्तावना २, शपथ २
४२ प्रश्नोऽनुयोगः पृच्छा च, प्रतिवाक्योत्तरे समे। प्रश्न ३, उत्तर २ [मिथ्या आरोप १
मिथ्याभियोगोऽभ्याख्यानमथ मिथ्याभिशंसनम्॥ मिथ्या आरोप २,
४३ अनुलापो मुहुर्भाषा, विलापः परिदेवनम्। वारंवार भाषण २, रोदनपूर्वक- २
विप्रलापो विरोधोक्तिः संलापो भाषणं मिथः॥ परस्पर विरोधी भाषण २ संभाषण १
४४ रुशती वागकल्याणी स्यात्कुल्या तु शुभात्मिका। अशुभ (वाणी) १ शुभ (वाणी) १
अत्यर्थमधुरं सान्त्वं, संगतं हृदयंगमम्॥ अति अर्थमधुर १, संबद्ध २
४५ निष्ठुरं परुषं, ग्राम्यमश्लीलं, सूनृतं प्रिये। निष्ठुर २, अश्लील २ प्रिय व सत्य १
सत्येऽथ संकुल-क्लिष्टे परस्परपराहते॥ पूर्वापर विरुद्ध २
४६ श्राव्यं हृद्यं मनोहारि विस्पष्टं प्रकटोदितम्। प्रकट ५
अथ म्लिष्टमविस्पष्टं, वितथ त्वनृतं वचः॥ अस्पष्ट २, असत्य २
४७ सत्यं तथ्यमृतं सम्यगमूनि त्रिषु तद्वति। सत्य ३
शब्दे निनाद-निनद-ध्वनि-ध्वान-रव-स्वनाः॥ आवाज-ध्वनि ७

## प्रथमं काण्डम्—नाट्य-वर्गः ७।

४८ ताण्डवं नटनं नाट्यं लास्यं नृत्यं च नर्तने। नृत्य ६
तौर्यत्रिकं नृत्य-गीत-वाद्यं नाट्यमिदं त्रयम्॥ नृत्यगीतवाद्ययुक्त नाटक २
४९ शृंगार-वीर-करुणाद्भुत-हास्य-भयानकाः। शृंगार, वीर, करुण, इ. ६ रस
बीभत्स-रौद्रौ च रसाः शृंगारः शुचिरुज्ज्वलः॥ बीभत्स १, रौद्र १, शृंगार ३
५० उत्साहवर्धनो वीरः कारुण्यं करुणा घृणा। वीर २, करुण ३
कृपा दयानुकम्पा स्यादनुक्रोशोऽप्यथो हसः॥ करुण ४, हास्य १
५१ हासो हास्यं च, बीभत्सं विकृतं त्रिष्विदं द्वयम्। हास्य २, बीभत्स २
विस्मयोद्भुतमाश्चर्यं चित्रमप्यथ भैरवम्॥ अद्भुत ४, भयंकर १
५२ दारुणं भीषणं भीष्मं घोरं भीमं भयानकम्। रौद्र ६
भयंकरं प्रतिभयं रौद्रं तूग्रममी त्रिषु॥ रौद्र ४
५३ गर्वोऽभिमानोऽहंकारो मानश्चित्तसमुन्नतिः। गर्व ५
दर्पोऽवलेपोऽवष्टम्भश्चित्तोद्रेकः स्मयो मदः। गर्व ६
अनादरः परिभवः परीभावस्तिरस्क्रिया॥ अनादर ४

## प्रथमं काण्डम्--पाताल-भोगि-वर्गः ८।

५४ अधोभुवन-पातालं बलिसद्म रसातलम्। पाताळ-पाताल ५
नागलोकोऽथ कुहरं सुषिरं विवरं बिलम्॥ बीळ-बिल ४

| | |
|---|---|
| ५५ छिद्रं निर्व्यथनं रोकं रन्ध्रं श्वभ्रं वपा शुषिः । | छिद्र ७ |
| गर्तावटौ भुवि श्वभ्रे, सरन्ध्रे सुषिरं त्रिषु ॥ | बिल २, सछिद्र १ |
| ५६ अन्धकारोऽस्त्रियां ध्वान्तं तमिस्रं तिमिरं तमः । | अंधकार ५ |
| ध्वान्ते गाढेऽन्धतमसं, क्षीणेऽवतमसं तमः ॥ | गाढ अंधकार १, थोडा अंध० १ |
| ५७ सर्पः पृदाकुर्भुजगो भुजंगोऽहिर्भुजंगमः । | सर्प ६ |
| अहेः शरीरं भोगः स्यादाशीरप्यहिदंष्ट्रिका ॥ | सर्पशरीर १, सर्पदंष्ट्रा १ |
| ५८ त्रिष्वाहेयं विषास्थ्यादि, स्फटायां तु फणा द्वयोः । | सर्पविष अस्थि १, फणा २ |
| समौ कञ्चुक-निर्मोकौ, क्ष्वेडस्तु गरलं विषम् ॥ | कात २, गरल ३ |

प्रथमं काण्डम्—नरक-वर्गः ९ ।

| | |
|---|---|
| ५९ स्यान्नारकस्तु नरको निरयो दुर्गतिः स्त्रियाम् । | नरक ४ |
| तद्भेदास्तपनावीची-महारौरव-रौरवाः ॥ | नरकभेद ३ |

प्रथमं काण्डम्—वारि-वर्गः १० ।

| | |
|---|---|
| ६० समुद्रोऽब्धिरकूपारः पारावारः सरित्पतिः । | समुद्र ५ |
| उदन्वानुदधिः सिन्धुः सरस्वान्सागरोऽर्णवः ॥ | समुद्र ६ |
| ६१ आपः स्त्री भूम्नि वार्वारि सलिलं कमलं जलम् । | जल ६ |
| पयः कीलालममृतं जीवनं भुवनं वनम् ॥ | जल ६ |
| ६२ कबन्धमुदकं पाथः पुष्करं सर्वतोमुखम् । | उदक ५ |
| अम्भोऽर्णस्तोय-पानीय-नीर-क्षीराम्बु-शम्बरम् ॥ | उदक ७ |
| ६३ भंगस्तरंग ऊर्मिर्वा स्त्रियां वीचिरथोर्मिषु । | लाट-लहर ४ |
| कूलं रोधश्च तीरं च प्रतीरं च तटं त्रिषु ॥ | तीर ५ |
| ६४ पद्माकरस्तडागोऽस्त्री कासारः सरसी सरः । | तलाव ५ [बावडी २ |
| वेशन्तः पल्वलं चाल्पसरो, वापी तु दीर्घिका ॥ | डबकें-अल्पसर ३, |
| ६५ खेयं तु परिखाधारस्त्वम्भसां यत्र धारणम् । | खंदक-खाई २, बांध १ |
| स्यादालवालमावालमावापो,ऽथ नदी सरित् ॥ | आळें-थाला ३, नदी २ |
| ६६ स्यादुत्पलं कुवलयमथ नीलाम्बुजन्म च । | नीलकमल ३ |
| इन्दीवरं च नीलेऽस्मिन्सिते कुमुदकैरवे ॥ | नीलकमल १, श्वेतकमल २ |
| ६७ कुमुदिन्यां नलिन्यां तु बिसिनी-पद्मिनीमुखाः । | कमलिनी ४ |
| वा पुंसि पद्मं नलिनमरविन्दं महोत्पलम् ॥ | कमल ४ |
| ६८ सहस्रपत्रं कमलं शतपत्रं कुशेशयम् । | कमल ४ |
| पङ्केरुहं तामरसं सारसं सरसीरुहम् ॥ | कमल ४ |

६९ बिसप्रसून-राजीव-पुष्कराम्भोरुहाणि च। कमल ४
पुण्डरीकं सिताम्भोजमथ रक्तसरोरुहे ॥ श्वेतकमल २, रक्तकमल १
७० रक्तोत्पलं कोकनदं, नालो नालमथास्त्रियाम्। रक्तकमल २, नाल २
मृणालं बिसमब्जादि-कदम्बे खण्डमस्त्रियाम् ॥ कमलतन्तु२, कमलसमूह १

द्वितीयं काण्डम्—भूमि-वर्गः १।

७१ भूर्भूमिरचलानन्ता रसा विश्वम्भरा स्थिरा। पृथ्वी ७
धरा धरित्री धरणिः क्षोणिर्ज्या काश्यपी क्षितिः ॥ पृथ्वी ७
७२ सर्वंसहा वसुमती वसुधोर्वी वसुंधरा। पृथ्वी ५
गोत्रा कुः पृथिवी पृथ्वी क्ष्मावनिर्मेदिनी मही ॥ पृथ्वी ८
७३ अयनं वर्त्म मार्गाध्व-पन्थानः पदवी सृतिः। मार्ग ७
सरणिः पद्धतिः पद्या वर्तन्येकपदीति च ॥ मार्ग ५

द्वितीयं काण्डम्—पुरवर्गः २।

७४ पूः स्त्री पुरी-नगर्या वा पत्तनं पुटभेदनम्। नगर ५
स्थानीयं निगमोऽन्यत्तु यन्मूलनगरात्पुरम् ॥ नगर २
७५ तच्छाखानगरं, वेशो वेश्याजनसमाश्रयः उपनगर १, वेश्यामुहल्ला १
आपणस्तु निषद्यायां विपणिः पण्यवीथिका ॥ दुकान २, बाजार २
७६ रथ्या प्रतोली विशाखा स्याच्चयोवप्रमस्त्रियाम्। गल्ली-गली३, तट २
प्राकारो वरणः सालः प्राचीनं प्रान्ततो वृतिः ॥ प्राकार ५
७७ गर्भागारं वासगृहमरिष्टं सूतिकागृहम्। माजघर १, सूतिकागृह २
गृहं गेहोदवसितं वेश्म सद्म निकेतनम् ॥ घर ६
७८ निशान्त-वस्त्य-सदनं भवनागार-मन्दिरम्। घर ६
गृहाः पुंसि च भूम्न्येव निकाय्य-निलयालयाः ॥ घर ४, [चौक १
७९ वासः कुटी द्वयोः शाला सभा, संजवनं त्विदम्। दिवाणखाना-सभाघर ४
चतुःशालं, मुनीनां तु पर्णशालोटजोऽस्त्रियाम् ॥ चौक१, पर्णशाला२
८० वातायनं गवाक्षो,ऽथ मण्डपोऽस्त्री जनाश्रयः। खिडकी २, मंडप २
हर्म्यादि धनिनां वासः, प्रासादो देवभूभुजाम् ॥ बंगला १, महाल १

द्वितीयं काण्डम्—शैल-वर्गः ३।

८१ महीध्रे शिखरि-क्ष्माभृदहार्य-धर-पर्वताः। पर्वत ६
अद्रि-गोत्र-गिरी-ग्रावाचल-शैल-शिलोच्चयाः ॥ पर्वत ७

८२ पाषाण-प्रस्तर-ग्रावोपलाश्मानः शिला दृषत् । पाषाण ७
कूटोऽस्त्री शिखरं शृङ्गं, प्रपातस्त्वतटो भृगु ॥ शिखर३, कड़ा-तट३
८३ कटकोऽस्त्री नितम्बोद्रेः, स्नुः प्रस्थः सानुरस्त्रियाम् । पर्वतमध्यभाग१, पठार३
उत्सः प्रस्रवणं, वारिप्रवाहो निर्झरो झरः ॥ झरा २, ओढा-झिरना ३
८४ दरी तु कंदरो वा स्त्री, देवखात-बिले गुहाः । कृत्रिम गुफा२, निसर्ग गुफा३
गह्वरं, गण्डशैलास्तु च्युताः स्थूलोपला गिरेः ॥ गुफा१, पर्वतच्युत शिळा १

## द्वितीयं काण्डम्--वनौषधि-वर्गः १४ ।

८५ अटव्यरण्यं विपिनं गहनं काननं वनम् । वन ६
महारण्यमरण्यानी, गृहारामास्तु निष्कुटाः ॥ विशालवन २, घरबाग २
८६ वृक्षो महीरुहः शाखी विटपी पादपस्तरुः । वृक्ष ६
अनोकहः कुटः शालः पलाशी द्रु-द्रुमागमः ॥ वृक्ष ७
८७ पत्रं पलाशं छदनं दलं पर्णं छदः पुमान् । पर्ण७ [वृक्षविस्तार२
पल्लवोऽस्त्री किसलयं, विस्तारो विटपोऽस्त्रियाम् ॥ डहाली-डगाली २
८८ स्त्रियः सुमनसः पुष्पं प्रसूनं कुसुमं समम् । पुष्प ४
मकरन्दः पुष्परसः, परागः सुमनोरजः ॥ पुष्पमधु २, पुष्परेणु २

## द्वितीयं काण्डम्—सिंहादि-वर्गः ५ ।

८९ सिंहो मृगेन्द्रः पञ्चास्यो हर्यक्षः केसरी हरिः । सिंह ६
वराहः सूकरो घृष्टिः कोलः पोत्री किरिः किटिः ॥ वराह ६
९० कपि-प्लवंग-प्लवग-शाखामृग-वलीमुखाः । वानर ९
मर्कटो वानरः कीशो वनौका, अथ भल्लुके ॥ वानर ४, आस्वल-रीछ १
९१ ऋक्षाऽच्छ-भल्ल-भल्लूका, गण्डके खड्ग-खड्गिनौ । रीस-रीच्छ४, गेंडा-गैंडा२
ओतुर्बिडालो मार्जारो वृषदंशक आखुभुक् ॥ मांजर-बिल्ली ५
९२ स्त्रियां शिवा भूरिमाय-गोमायु-मृगधूर्तकाः । कोल्ही-गीदड ४
शृगाल-वञ्चुक-क्रोष्टु-फेरु-फेरव-जम्बुकाः ॥ कोल्हा-गीदड ६
९३ कृष्णसार-रुरु-न्यंकु-रंकु शम्बर-रौहिषाः । मृगभेद ६
गोकर्ण-पृषतैणर्श्य-रोहितश्चामरो मृगाः ॥ मृगभेद ६
९४ उन्दरुर्मूषिकोऽप्याखुर्गिरिका बालमूषिका । मूषक ३, बालमूषिका १
सरटः कृकलासः स्यान्मुसली गृहगोधिका ॥ गिरगट२, छिपकली२

९५ लूता स्त्री तन्तुवायोर्णनाभ-मर्कटकाः समाः । कोळी-मकडी ४
नीलंगुस्तु कृमिः कर्णजलौका शतपद्युभे ॥ कृमि२, गोम-कानखजूरा २
९६ वृश्चिकः शूककीटः स्यादलि-द्रोणौ तु वृश्चिके । शुककीट २, वृश्चिक ३
पारावतः कलरवः कपोतोऽथ शशादनः ॥ कबूतर ३, शिकरा १
९७ दिवान्धः कौशिको घूको दिवाभीतो निशाटनः । घुबड-उल्लू ५
व्याघ्राटः स्याद्भरद्वाजः, खञ्जरीटस्तु खञ्जनः ॥ लावा-लाव२, खंजन २
९८ वनप्रियः परभृतः कोकिलः पिक इत्यपि । कोकिल ४
मयूरो बर्हिणो बर्ही नीलकण्ठो भुजङ्गभुक् ॥ मोर ५
९९ जतुकाऽजिनपत्रा स्यात्परोष्णी तैलपायिका । चिमगादर२, झुरळ-तेलडुबा२
वर्वणा मक्षिका नीला, सरघा मधुमक्षिका ॥ मक्खी३, मधुमक्षिका २
१०० पतङ्गिका पुत्तिका स्याद्दंशस्तु वनमक्षिका । मधुमक्षिका भेद २, डांस २
दंशी तज्जातिरल्पा स्याद्गन्धाली वरटा द्वयोः ॥ अल्प डांस १, गांधोली २
१०१ भृङ्गारी झीरुका चीरी झिल्लिका च समा इमाः । चिलट-चीलर ४
समौ पतङ्ग-शलभौ, खद्योतो ज्योतिरिङ्गणः ॥ पतंग २, खद्योत २
१०२ मधुव्रतो मधुकरो मधुलिण्मधुपालिनः । भ्रमर ५
द्विरेफ-पुष्पलिड्-भृङ्ग-षट्पद-भ्रमरालयः ॥ भ्रमर ६
१०३ खगे विहंग-विहग-विहंगम-विहायसः । पक्षी ५
शकुन्ति-पक्षि-शकुनि-शकुन्त-शकुन-द्विजाः ॥ पक्षी ६

द्वितीयं काण्डम्--मनुष्य-वर्गः ६ ।

१०४ मनुष्या मानुषा मर्त्या मनुजा मानवा नराः । मनुष्य ६
स्युः पुमांसः पञ्चजनाः पुरुषाः पूरुषा नरः ॥ मनुष्य ५
१०५ स्त्री योषिदबला योषा नारी सीमन्तिनी वधूः । स्त्री ७
प्रतीपदर्शिनी वामा वनिता महिला तथा ॥ स्त्री ४
१०६ भार्या जायाथ पुंभूम्नि दाराः स्यात्तु कुटुम्बिनी । पत्नी३, कुटुंबवत्सल स्त्री२
पुरंध्री, सुचरित्रा तु सती साध्वी पतिव्रता ॥ पतिव्रता ४
१०७ शिशुत्वं शैशवं बाल्यं, तारुण्यं यौवनं समे । बाल्य ३, तारुण्य २
स्यात्स्थाविरं तु वृद्धत्वं वृद्धसंघेऽपि वार्धकम् ॥ वृद्धत्व ३
१०८ अङ्गं प्रतीकोऽवयवोऽपघनो,ऽथ कलेवरम् । अवयव ४, शरीर १
गात्रं वपुः संहननं शरीरं वर्ष्म विग्रहः ॥ शरीर ६

| | |
|---|---|
| १०९ कायो देहः क्लीबपुंसोः स्त्रियां मूर्तिस्तनुस्तनूः। | शरीर ९ |
| पादाग्रं प्रपदं पादः पदंघ्रिश्चरणोऽस्त्रियाम् ॥ | पवचा-पादाग्र २ |
| ११० वक्त्रास्ये वदनं तुण्डमाननं लपनं मुखम्। | मुख ७ [पाय-पैर ४ |
| क्लीबे घ्राणं गन्धवहा घोणा नासा च नासिका॥ | नाक-नासिका ५ |
| १११ लोचनं नयनं नेत्रमीक्षणं चक्षुरक्षिणी। | नेत्र ६ |
| कर्णशब्दग्रहौ श्रोत्रं श्रुतिः स्त्री श्रवणं श्रवः | कान ६ |
| ११२ उत्तमाङ्गं शिरः शीर्षं मूर्धा ना मस्तकोऽस्त्रियाम्। | मस्तक ५ |
| चिकुरः कुन्तलो वालः कचः केशः शिरोरुहः॥ | केस-केश ६ |

## द्वितीयं काण्डम्—ब्रह्मवर्गः ७।

| | |
|---|---|
| ११३ महाकुल-कुलीनार्य-सभ्य-सज्जन-साधवः। | सज्जन ६ |
| ब्रह्मचारी गृही वानप्रस्थो भिक्षुश्चतुष्टये॥॥ | चार आश्रम |
| ११४ विद्वान् विपश्चित् दोषज्ञः सन् सुधीः कोविदो बुधः। | विद्वान् ६ |
| धीरो मनीषी ज्ञः प्राज्ञः संख्यावान् पण्डितः कविः॥ | पण्डित ७ |
| ११५ मूर्धाभिषिक्तो राजन्यो बाहुजः क्षत्रियो विराट्। | क्षत्रिय ५ |
| राजा राट् पार्थिव-क्ष्माभृन्नृप-भूप-महीक्षितः॥ | राजा ७ |
| ११६ दन्ती दन्तावलो हस्ती द्विरदोऽनेकपो द्विपः। | हत्ती-हस्ती ६ |
| मतङ्गजो गजो नागः कुञ्जरो वारणः करी। | गज ६ |
| ११७ भटा योधाश्च योद्धारः, सेनारक्षास्तु सैनिकाः। | योद्धा ३, सैनिक २ |
| सेनायां समवेता ये सैन्यास्ते सैनिकाश्च ते॥ | सैन्य २ |
| ११८ ध्वजिनी वाहिनी सेना पृतनाऽनीकिनी चमूः। | सेना ६ |
| वरूथिनी बलं सैन्यं चक्रं चानीकमस्त्रियाम्॥ | सेना ५ |

## द्वितीयं कण्डम्—वैश्य-वर्गः ९।

| | |
|---|---|
| ११९ ऊरव्य ऊरुजा अर्या वैश्या भूमिस्पृशो विशः। | वैश्य ६ |
| आजीवो जीविका वार्ता वृत्तिर्वर्तन-जीवने॥ | जीविका ६ |
| १२० क्षेत्राजीवः कर्षकश्च कृषिकश्च च कृषीवलः। | शेतकरी-कृषिक ४ |
| उक्षा भद्र बलीवर्द ऋषभो वृषभो वृषः॥ | बैल ६ [फाल १ |
| १२१ दात्रं लवित्रमाबन्धो योत्रं योक्त्रमथो फलम्। | दराती २, कासरा-डोर ३ |
| निरीशं कुटकं फलः कृषको लाङ्गलं हलम्॥ | फाल ३, नांगर-हल ३ |
| १२२ तोकमस्तु तत्र हरिते, कलायस्तु सतीनकः। | हरा जव १, वाटाणा-मटर २ |
| हरेणु-रेणुकौ चास्मिन् कोरदूषस्तु कोद्रवः॥ | वाटाणा-मटर २, कोदू २ |

१२३ मङ्गल्यको मसूरो,ऽथ मकुष्टक-मयुष्टकौ । मसूर २, मोट २
वनमुद्गे, सर्षपे तु द्वौ तन्तुभ-कदम्बकौ ॥ मोट १, मोहरी-सरसों २
१२४ सिद्धार्थस्त्वेष धवलो, गोधूमः सुमनः समौ। । सफेदसरसों १, गहूं-गेहूं २
स्याद्यावकस्तु कुल्माषश्चणको हरिमन्थकः ॥ अर्धपक्व यव२, चना २
१२५ किंशारुः सस्यशूकं स्यात्, कणिशं सस्यमञ्जरी। धान्याचे कुसळ२, भुट्टा२
धान्यं व्रीहिः स्तम्बकरिः, स्तम्बो गुच्छस्तृणादिनाम्॥ धान्य३, तृण-गुच्छ१
१२६ नाडी नालं च काण्डोऽस्य पलालोऽस्त्री स निष्कलः । कांड २, कडबी १
कडङ्गरो बुसं क्लीबे धान्यत्वचि तुषः पुमान् ॥ भूस-भूसी २, कोंडा-छिलका १
१२७ प्राजनं तोदनं तोत्रं, खनित्रमवदारणे । चाबूक ३, कुदळ-कुदार २
अयोऽग्रं मुसलोऽस्त्री स्याद् उदूखलमुलूखलम् ॥ मूसळ २, ओखली २
१२८ प्रस्फोटनं शूर्पमस्त्री, चालनी तितउः पुमान्। सूप-छाज२, चाळणी-चलनी२
स्यूत-प्रसेवौ कण्डोल-पिटौ कट-किलिञ्जकौ ॥ पोतें-बोरा २, पिटारी २
१२९ कलम्बश्च कडम्बश्च, बेषवार उपस्करः । देंठ-सागकी डंडी२, मसाला२
तिन्तिडीकं च चुक्रं च वृक्षाम्लमथ वेल्लजम् ॥ चिंच-खटाई ३, मिरीं १
१३० मरीचं कोलकं कृष्णमुषणं धर्मपत्तनम् । तिखट-मिरच ७
कुस्तुम्बरु च धान्याकमथ शुण्ठी महौषधम् ॥ धने-धनिया २, सोंठ २
१३१ निशाख्या काञ्चनी पीता हरिद्रा वरवर्णिनी । हळद-हलदी ५
सामुद्रं यत्तु लवणम् अक्षीवं वशिरं च तत् ॥ समुद्राचें मीठ-नमक २
१३२ मत्स्यंडी फाणितं खण्डविकारः शर्करा सिता । राब २, शक्कर २
घृतमाज्यं हविःसर्पिर्नवनीतं नवोध्दृतम् ॥ घी ४, लोणी-मख्खन २
१३३ विक्रेता स्याद्विक्रयिकः, क्रायिक-क्रयिकौ समौ । विक्रेता २, खरीददार २
वाणिज्यं तु वणिज्या स्यान्मूल्यं वस्नोऽप्यवक्रयः ॥ व्यापार २, मोल ३
१३४ नीवी परिपणो मूलधनं लाभोऽधिकं फलम् । भांडवल-मूलधन३, नफा१
परिदानं परीवर्तो नैमेय-नियमावपि ॥ देणेंघेणें-लैनदैन ४
१३५ द्रव्यं वित्तं स्वापतेयं रिक्थमृक्थं धनं वसु । धन ७
मुक्ताऽथ विद्रुमः पुंसि प्रवालं पुं नपुंसकम् ॥ मोतीं १, प्रवाळ-मूंगा २
१३६ स्वर्णं सुवर्णं कनकं हिरण्यं हेम हाटकम् । सोनें-सुन्ना ६
दुर्वर्णं रजतं रूप्यं खर्जूरं श्वेतमित्यपि ॥ चांदी ५

द्वितीयं काण्डम्—शूद्र-वर्गः १० ।

१३७ कारुः शिल्पी, संहतैस्तैर्द्वयोः श्रेणिः सजातिभिः । कारीगर२, संघ१ [माली१
कुलकः स्यात्कुलश्रेष्ठी, मालाकारस्तु मालिकः ॥ शिल्पसंघनायक २

१३८ कुम्भकारः कुलालः स्यात्, पलगण्डस्तु लेपकः । कुम्हार २, गवंडी-राज २
तन्तुवायः कुविन्दः स्यात्, तुन्नवायस्तु सौचिकः ॥ जुलाहा २, दर्जी २
१३९ रङ्गाजीवश्चित्रकरः, शस्त्रमार्जोऽसिधावकः । लीलगर २, शिकलगर १
पादूकृच्चर्मकारः स्याद्, व्योकारो लोहकारकः ॥ चमार २, लुहार २
१४० नाडिंधमः स्वर्णकारः कलादो रुक्मकारकः । सोनार-सुनार ४
स्याच्छांखिकः काम्बविकः, शौल्बिकस्ताम्रकुट्टकः ॥ चूडीवाला २, कसार २
१४१ तक्षा तु वर्धकिस्त्वष्टा रथकारस्तु काष्ठतट् । वाडी-बढाई ५
व्याधो मृगवधाजीवो मृगयुर्लुब्धकोऽपि सः ॥ व्याध ४
१४२ क्षुरी मुण्डी दिवाकीर्ति-नापितान्तावसायिनः । न्हावी-नाई ५
निर्णेजकः स्याद्रजकः, शौण्डिको मण्डहारकः ॥ धोबी २, कलाल २
१४३ भृतको भृतिभुक् कर्मकरो वैतनिकोऽपि सः । मजूर-मजदूर ४
नियोज्य-किंकर-प्रैष्य-भुजिष्य-परिचारकः ॥ नौकर ५
१४४ पिटकः पेटकः पेटा मञ्जूषाऽथ विहङ्गिका । सन्दूक ४, कावड १
व्रश्चनः पत्रपरशुरीषिका तूलिका समे ॥ रेती २, लेखनी २
१४५ आस्फोटनी वेधनिका, कृपाणी कर्तरी समे । बरमा २, कैंची २
वृक्षादनी वृक्षभेदी, टङ्कः पाषाणदारकः ॥ कुल्हाडी २, टांकी २
१४६ क्रकचोऽस्त्री करपत्रमारा चर्मप्रभेदिका । आरी २, रापी-
कर्मण्या तु विधा-भृत्या-भृतयो भर्म वेतनम् ॥ मजूरी-मजदूरी ६

तृतीयं काण्डम्—विशेष्य-निघ्न-वर्गः ॥१॥

१४७ प्रवीणे निपुणाभिज्ञ-विज्ञ-निष्णात-शिक्षिताः । प्रवीण ६
परतन्त्रः पराधीनः परवान्नाथवानपि ॥ पराधीन ४
१४८ स्यादधृष्टे तु शालीनो, विलक्षो विस्मयान्विते । शालीन २ चकित २
अधीरे कातरस्त्रस्ते, भीरु-भीरुक-भीलुकाः ॥ अधीर २, डरपोक ३
१४९ क्रोधनोऽमर्षणः कोपी, चण्डस्त्वत्यन्तकोपनः । क्रोधी ३, अतिकोपी २
वाचोयुक्तिपटुर्वाग्मी, वावदूकोऽतिवक्तरि ॥ न्याययुक्त वक्ता २, बहुभाषी
१५० स्याज्जल्पाकस्तु वाचालो वाचाटो बहुगर्ह्यवाक् । वाचाळ-वाचाल ५
दुर्मुखे मुखराबद्धमुखौ, शुक्लः प्रियंवदे ॥ अप्रियवादी ३, प्रियवादी २
१५१ कर्णेजपः सूचकः स्यात्पिशुनो दुर्जनः खलः । चुगलखोर ३, दुर्जन २
नृशंसो घातुकः क्रूरः पापो, धूर्तस्तु वञ्चकः ॥ क्रूर ४, वंचक २
१५२ सुन्दरं रुचिरं चारु सुषमं साधु शोभनम् । सुंदर ६
कान्तं मनोरमं रुच्यं मनोज्ञं मञ्जु मञ्जुलम् ॥ सुंदर ६

१५३ मलीमसं तु मलिनं कच्चरं मलदूषितम् । मलिन ४
पूतं पवित्रं मेध्यं च, वीध्रं तु विमलार्थकम् ॥ पवित्र ३, निर्मल १
१५४ विशङ्कटं पृथु बृहद्विशालं पृथुलं महत् । विशाल ६
प्रभूतं प्रचुरं प्राज्यमदभ्रं बहुलं बहु ॥ बहुत ६
१५५ वड्रोरु विपुलं पीनं पीन-पीन्वी तु स्थूल-पीवरे । विपुल३, स्थल-मोटा ४
स्तोकाल्प- क्षुल्लकाः सूक्ष्मं श्लक्ष्णं दभ्रं कृशं तनु ॥ थोडें-अल्प ३, सूक्ष्म ५
१५६ उच्च-प्रांशून्नतोदग्रोच्छ्रितास्तुङ्गेऽथ वामने । उंच उंचा ६, ठिंगना १
न्यङ् नीच-खर्व-ह्रस्वाः स्युरवाग्रेऽवनतानतम् ॥ ठिंगना४, अधोमुख २
१५७ कर्कशं कठिनं क्रूरं कठोरं निष्ठुरं दृढम् । कठीण--कठिन ६
जठरं मूर्तिमन्मूर्तं, प्रवृद्धं प्रौढमेधितम् ॥ कठीण--कठिन ३, प्रौढ ३
१५८ पुराणे प्रतन-प्रत्न--पुरातन--चिरन्तनाः । पुरातन ५
प्रत्यग्रोऽभिनवो नव्यो नवीनो नूतनो नवः ॥ नवीन ६

तृतीयं काण्डम्---अव्ययवर्गः ॥४॥

१५९ चिराय--चिररात्राय--चिरस्याद्याश्चिरार्थकाः । चिरकाल ६
मुहुः पुनः पुनः शश्वदभीक्ष्णमसकृत्समाः ॥ वारंवार ५
१६० स्राग्झटित्यञ्जसाह्नाय द्राङ्मङ्क्षु सपदि द्रुते । शीघ्र ७
बलवत्सुष्ठु किमुत स्वत्यतीव च निर्भरे ॥ अतिशय ६
१६१ पृथग्विनान्तरेणर्ते हिरुङ्नाना च वर्जने । शिवाय--सिवाय ३
कदाचिज्जातु, सार्धं तु साकं सत्रा समं सह ॥ कदाचित् २, साथ५
१६२ आहो उताहो किमुत विकल्पे किं किमूत च । खरेंच--सचमुच ६
तु हि च स्म ह वै पादपूरणे पूजने स्वति ॥ पादपूरणार्थ६, सद्दर्शनार्थ२
१६३ व वा यथा तथैवैवं साम्येऽहो ही च विस्मये। साम्यदर्शक६, विस्मयदर्शक२
मौने तु तूष्णीं तूष्णीकां, सद्यः सपदि तत्क्षणे ॥ मौनदर्शक २, तत्काल ३
१६४ युक्ते द्वे साम्प्रतं स्थानेऽभीक्ष्णं शश्वदनारते । योग्य २, निरंतर ३
अभावे नह्य नो नापि, मास्म मालं च वारणे ॥ नाहीं-नहीं४, नको-नहि३
१६५ ननु च स्याद्विरोधोक्तौ, कच्चित्कामप्रवेदने । विरोधदर्शक १ इच्छापृच्छार्थ १
मृषा मिथ्या च वितथे, यथार्थं तु यथायथम् । असत्य २, सत्य २
१६६ पुनरर्थेऽङ्ग, निन्दायां दुष्ठु, सुष्ठु प्रशंसने । पुनः २, बुरा १, अच्छा १
सायं, साये प्रगे प्रातः प्रभाते, निकषाऽन्तिके ॥ सायंकालको, प्रभातको, निकटमें
१६७ ह्यो गतेऽनागतेऽह्नि श्वः, परश्वस्तु परेऽहनि । कल १, कल१, परसों १
तदा तदानीं, युगपदेकदा, सर्वदा सदा ॥ तब २, एकसाथ १, एकदा १,

# शब्द-सूचिः

# संस्कृत-भाषा-प्रचारि-सभायाः
# मौखिक-संस्कृत-परीक्षाः

संस्कृत-भाषा-प्रचारि-सभायाः निम्नलिखित-मौखिक-परीक्षाः प्रतिवर्षं भविष्यन्ति । एताः सर्वाः परीक्षाः मौखिक्यः एव वर्तन्ते । परीक्षाः प्रतिवर्षं द्विवारं ख्रिस्ताब्दस्य प्रथमे मासि अष्टमे मासि च एवं (हेमन्ततौ वर्षतौ च) भविष्यन्ति । द्वयोः परीक्षयोः मध्ये भवेत् षण्मासानाम् अन्तरम् । नागपुरस्थाः नागपुरात् बहिःस्थाः च परीक्षार्थिनः बाल-बालिकाः परीक्षार्हाः भवेयुः। परीक्षा-शुल्कं प्रतिछात्रं चतुराणकं केवलम् । यदि दश-संख्याधिकाः परीक्षार्थिनः आवेदन-पत्रं सर्वकार-मान्य-विद्यालयस्य मुख्याध्यापक-द्वारा प्रेषयिष्यन्ति तर्हि परीक्षा-केन्द्रस्य आयोजनं मुख्याध्यापक-महाभागस्य सहकार्येण कर्तुं शक्यते । आवेदन-पत्राणि परीक्षाशुल्केन सह परीक्षा-मासस्य मासक-पूर्वं प्रेषणीयानि । आवेदन-पत्रे परीक्षार्थिनः नाम, पितुः नाम, कुल-नाम, वयः, पाठशाला, निवासस्थानं, केन्द्र-नाम च लिखन्तु । परीक्षोत्तीर्णच्छात्रेभ्यः प्रमाण-पत्राणि प्रदीयन्ते यथासमयम् । श्रेणि-गुणानां प्रतिशतता अधोलिखिता भवेत्—

| | |
|---|---|
| प्रथम-श्रेणिः | ८०-१०० |
| द्वितीय-श्रेणिः | ६०- ७९ |
| तृतीय-श्रेणिः | ४०- ५९ |
| प्रावीण्यम् | ९०-१०० |

एतासां परीक्षाणां नामानि अभ्यास-क्रमः पुस्तक-नामानि च अधः लिख्यन्ते । अभ्यास-क्रमान्तर्गतानां द्वादश-पाठ्य-पुस्तकानां मूल्यम् आणक-द्वयं प्रत्येकम् ।

प्रथम-परीक्षा—

१. बालामृत-शतश्लोकी, प्रथम-भागः*
२. सुलभ-शब्द-रूपावलिः*
३. व्यवहार-प्रश्नोत्तरी*

द्वितीय-परीक्षा—

४. उपयुक्त-धातुरूपावलिः*
५. हितोपदेश-कथाः*
६. संक्षिप्तामरकोशः*

प्रथम-परीक्षायाः अभ्यासक्रमः च ।

तृतीय-परीक्षा—

७. बालामृत-शतश्लोकी (द्वितीय-भागः)
८. रामायण-कथाः
९. व्यवहार-प्रश्नोत्तरी (द्वितीय-भागः)

द्वितीय-परीक्षायाः अभ्यासक्रमः च ।

संस्कृत-प्रवेश-परीक्षा—

१०. महाभारत-कथाः
११. नाट्य-प्रवेशः
१२. कौमुदी-प्रवेशः

तृतीय-परीक्षायाः अभ्यासक्रमः च ।

*मुद्रिताः
धर्मपीठम्, नागपुरम् १

स. ना. कुलकर्णी
सं.भा.प्र.सभायाः
प्रमुख-कार्यवाहः



इयं पुस्तिका नागपुरस्थ-नारायण-मुद्रणालये मुद्रिता नागपुरस्थ-संस्कृतभाषाप्रचारि-सभा-द्वारा प्रमुख-कार्यवाहेन धर्मपीठे कुलकर्णी-भवने प्रकाशतां च नीता ।

संस्कृत-भाषा-प्रचार-वाङ्मयमाला

# छात्रामृत-शतश्लोकी

( छात्राणां कृते )



श्रीमतां मोर-कुलावतंसानां
नरसिंगदास-महाभागानां
दानानुग्रह-फलम् इदम् ।

संकलयिता—स. ना. कुलकर्णी



सप्तमं पुष्पम् ]  १९५४  [मूल्यम् आणक-द्वयम्

अस्यां पुस्तिकायां छात्रेभ्यः संस्कृत-वाङ्मय-भाण्डागारस्य अल्पं परिचयं दातुं प्रयत्नः कृतः। आर्याणां प्राचीनतमम् अपौरुषेयम् इति ख्यातम् वेदवाङ्मयम्। तस्मात् अतिपुराणतमात् ऋग्वेदात् आरभ्य अर्वाचीन-जगन्नाथकविकृत-भामिनी-बिलासं यावत् प्रथितयशस्कानां कविकुलगुरूणां परमप्रेम्णा आद्रियमाणेभ्यः ग्रन्थेभ्यः अवतारिताः काव्यखण्डाः। एतेषां पठनेन तेषां तेषां कवीनां भाषाशैलीनां विचार-प्रवाहाणां च दिग्दर्शनं भवेत्। तत्तद्विभागः मूलग्रन्थस्य परिपठनं कर्तुं छात्रं प्रोत्साहयेत्। उद्धृतानां काव्यखण्डानां क्रमः कालक्रमानुसारेण दत्तः। अनेन क्रमेण प्राचीनतमात् कालात् भाषासंक्रमः विचारविकाशः च कथम् उत्तरोत्तरं जातः तद् अपि छात्रस्य दृष्टिपथं यायात्।

'संस्कृतं संस्कृतेर्मूलम्' इति संस्कृत-भाषा-प्रचारि-सभायाः घोष-वाक्यम्। संस्कृते संस्कृतिः कथम् अनुस्यूता भवति इति अस्य अनुभवः वाचकस्य प्रतिपदं भवति एव। **ऋग्वेदे** इन्द्रादिदेवतास्तुतिः अक्षदेवन-निषेधः सृष्टिविषयकाः कुतूहल-पूर्णप्रश्नाः, विराट्पुरुषस्य भव्यकल्पना, इत्यादि—विषयाः मनः हरन्ति। **उपनिषत्सु** 'इशावास्यमिदं सर्वम्' इति तत्वज्ञान-सिद्धान्तः, श्रेयःप्रेयसोः वरणं परात्पर-पुरुषस्य विचारः, 'भद्रं कर्णेभिः शृणुयाम देवाः', 'ॐ सहनाववतु' इत्यादि-वैदिक-प्रार्थनाः, चेतः सम्यक् आकर्षन्ति; **महाभारते** 'न जातु कामः कामाना-मुपभोगेन शाम्यति' 'शीलं प्रधानं पुरुषे' 'श्रद्धावाँल्लभते ज्ञानं' 'उद्धरेदात्म-नात्मानम्' 'यादृशं वपते बीजं तादृशं फलमश्नुते' इत्यादीनां देशकालनिरपेक्षाणां स्थिर-सिद्धान्तानां वर्णनं हृदयम् आल्हादयति; **रामायणे** प्रियदर्शनस्य रामस्य गुणाः वनं व्रजन्तं लक्ष्मणं प्रति सुमित्रायाः सदुपदेशः, रामस्य प्रतिज्ञापरिपालनम्, सीता-लङ्कारप्रत्यभिज्ञाने लक्ष्मणस्य उक्तिः, इत्यादयः प्रसङ्गाः भारतीयसंस्कृतेः कांश्चन आदर्शान् इव स्थापयन्ति; **मनुस्मृतौ** 'अभिवादयेद्वृद्धांश्च', 'बालादपि सुभाषितं', 'नाप्सु मूत्रं समुत्सृजेत्', 'हीनाङ्गानतिरिक्ताङ्गान् जाति-हीनांश्च नाक्षिपेत्' 'यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत्', इत्यादिः विधिनिषेधात्मकः मानवधर्मोपदेशः चित्तं प्रसादयति, **रघुवंशे** दिलीप-नृपस्य कामधेनुरक्षाप्रसङ्गेन देवगुरुनिष्ठा, क्षत्रियधर्मः, भौतिक-शरीरात् यशःशरीरस्य रक्षणे अधिकतरा आस्था, विमुक्तबाहोः अपि न्यस्तशस्त्रस्य स्वदेहोपनयनम् इत्यादयः घटनाः भारतीय-संस्कृतेः आदर्शान् पुरः निधाय गात्राणि पुलकयन्ति, **किरातार्जुनीये** द्रौपद्याः भाषणमुखेन भारतीय-राजपत्नीनां बहुश्रुतत्वं वाक्पटुत्वं च स्फुटीकृतम्; **शिशुपालवधे** शिशुपालेन कृष्णं प्रति प्रेषितस्य प्रतिभानवतः दूतस्य व्यर्थयुतं भाषणे वाक्पाटवं प्रदर्शितं, **चर्पटपञ्जरिका-स्तोत्रे** स्वीकृता वर्णयोजना पाठकानाम् अन्तःकरणं नितान्तं प्रीणयति, **भामिनी-विलासे** च अन्योक्तिश्लोकानाम् अर्थमाधुर्यं वर्णमाधुर्यं च हृदयम् आनन्दयति; एवंभूतः वैशिष्ट्यपूर्णः हृदयङ्गमः काव्यकलापः छात्रैः कण्ठस्थीकृतः चेत् जीवनपथि विचरतां तेषाम् अन्धस्य यष्टिः इव, रात्रि-प्रवासिनः दीपः इव पथप्रदर्शनं कुर्यात् इति नास्ति संशयलेशः अपि। आर्यसंस्कृतेः च उज्वलपरम्परारक्षणे ते भृशं सहायकाः भवेयुः।

**धर्मपीठम्, नागपुरम्**
रामनवमी शके १८७६
दिनाङ्कः ११-४-५४

**स. ना. कुलकर्णी**
प्रमुख-कार्यवाहः
**संस्कृत-भाषा-प्रचारिणी सभा**

१. स नः पितेव सूनवेऽग्ने सूपायनो भव ।
सचस्वा नः स्वस्तये ।। १।१।९

१. हे अग्निदेव ! पुत्रके लिये पिताके समान आप हमें सुलभ हों । आप हमारे कल्याणके लिये सज्ज रहें ।

२. यः पृथिवीं व्यथमानामदृंहद्
यः पर्वतान्प्रकुपितॉ अरम्णात् ।
यो अन्तरिक्षं विममे वरीयो
यो द्यामस्तभ्नात्स जनास इन्द्रः ॥
२।१२।२

२. हे जनगण ! इन्द्र वह देव है जिसने कम्पमान पृथ्वीको दृढ किया, प्रक्षुब्ध पर्वतोंको स्थिर किया, विस्तृत अन्तरिक्षको मापा तथा आकाशको आधार दिया है ।

३. अपाम सोमममृता अभूमा-
गन्म ज्योतिरविदाम देवान् ।
किं नूनमस्मान्कृणवदरातिः
किमु धूर्तिरमृत मर्त्यस्य ॥ ८।४८।३

३. हे अमृत ! हमने सोमरसका पान किया । इसीसे अमर हुये, ज्योति प्राप्त की अेवं देवोंका सान्निध्य प्राप्त किया । अब शत्रुगण तथा मर्त्योंका छलकपट हमारा कुछ नहीं कर सकते ।

४. अक्षैर्मा दीव्यः कृषिमित्कृषस्व
वित्ते रमस्व बहु मन्यमानः ।
तत्र गावः कितव तत्र जाया
तन्मे विचष्टे सवितायमर्यः ॥
१०।३४।१३

४. आर्य सवितृदेवने मुझे यह शिक्षा दी है । "द्यूत मत खेलो, खेती ही करो, प्राप्त वित्तको बहुत मानकर उसीसे संतुष्ट रहो । हे जुवाड़ी ! अिस मार्गसे ही गोधन तथा गृहिणीका सुख मिलेगा ।"

५. सहस्रशीर्षा पुरुषः
सहस्राक्षः सहस्रपात् ।
स भूमिं विश्वतो वृत्वा-
त्यतिष्ठद्दशाङ्गुलम् ।। १०।९०।१

५. विराट् पुरुषके सहस्रों सिर, सहस्रों नेत्र तथा सहस्रों पैर हैं । वह समस्त भूलोक को सर्व ओरसे घेरकर उससे भी आगे दस अंगुलि रहा है ।

६. ब्राह्मणोऽस्य मुखमासीद्
बाहू राजन्यः कृतः ।
ऊरू तदस्य यद्वैश्यः
पद्भ्यां शूद्रो अजायत ॥१०।९०।१२

६. इस विराट् पुरुषका ब्राह्मण मुख है, क्षत्रिय बाहु हैं । वैश्य उसकी जांघें हैं, पैरसे शूद्र उत्पन्न हुआ है ।

७. इयं विसृष्टिर्यत आबभूव
यदि वा दधे यदि वा न ।
यो अस्याध्यक्षः परमे व्योमन्
सो अङ्ग वेद यदि वा न वेद ॥
१०।१२९।७

७. यह विशाल सृष्टि जिससे पैदा हुई, वह अिसका धारण करता है या नहीं ? परमोच्च आकाशमें जो अिस सृष्टिका अध्यक्ष है वह भी अिसको सच-मुच जानता है या नहीं !

८. समानी व आकूतिः
समाना हृदयानि वः ।
समानमस्तु वो मनो
यथा वः सुसहासति ।।

८. आप लोगोंके अभिप्राय समान हों; आप लोगोंके हृदय समान हों; आप लोगोंके मन समान हों जिससे आप लोगोंका सामूहिक कल्याण हो ।

१. ईशावास्यमिदं सर्व्वम्
यत्किंच जगत्यां जगत् ।
तेन त्यक्तेन भुञ्जीथा
मा गृधः कस्यस्विद्धनम् ।। १।१

१. इस जगती के समस्त परिवर्तन-शील वस्तुओंमें ईश का वास है। इस जगत् के उपभोगसे जो बचे उसका तुम उपयोग करो। किसी अन्य के धनका लोभ मत करो।

२. अन्यच्छ्रेयोऽन्यदुतैव प्रेयस्
ते उभे नानार्थे पुरुष॰ सिनीतः ।
तयोः श्रेय आददानस्य साधु भवति
हीयतेऽर्थाद्य उ प्रेयो वृणीते ।। २।१

२. श्रेयस् और प्रेयस्-ये दोनो विभिन्न प्रयोजनवाली वस्तुयें हैं। पुरुष इनसे बद्ध होता है। जो श्रेयस् को स्वीकार करता है, उसका कल्याण होता है। जो प्रेयस् को चुनता है, वह पुरुषार्थसे च्युत हो जाता है।

३. न तत्र सूर्यो भाति न चन्द्रतारकं
नेमा विद्युतो भान्ति कुतोऽयमग्निः।
तमेव भान्तमनुभाति सर्व्वं
तस्य भासा सर्व्वमिदं विभाति ।।५।१५

३. वहां सूर्यका प्रकाश नहीं है, न चन्द्र न तारागण, न यह बिजली वहां प्रकाश करती है, फिर अग्नि की बात ही क्या? उसके प्रकाशमान होने पर सब प्रकाशित होते हैं।

४. यथा नद्यः स्यन्दमानाः समुद्रेऽ-
स्तं गच्छन्ति नामरूपे विहाय ।
तथा विद्वान्नामरूपाद्विमुक्तः
परात्परं पुरुषमुपैति दिव्यम् ।।२।८

४. जैसे बहती हुई नदियाँ अपना नाम और रूप खोकर समुद्रमें विलीन हो जाती हैं, वैसे ही ज्ञानी नामरूपरहित होकर उस परात्पर दिव्य पुरुषको प्राप्त होता है।

५. वेदाहमेतं पुरुषं महान्त—
मादित्यवर्णं तमसः परस्तात् ।
तमेव विदित्वातिमृत्युमेति
नान्यः पन्था विद्यतेऽयनाय ।।३।८

५. मैंने उस आदित्यवर्ण और तमस् के परे स्थित महान् पुरुषको जान लिया है। वहां जानेके लिये कोई अन्य मार्ग नहीं है।

६. ॐ पूर्णमदः पूर्णमिदं
पूर्णात्पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय
पूर्णमेवावशिष्यते ।।

६. वह पूर्ण है, यह पूर्ण है, पूर्णसे पूर्ण निकलता है। पूर्णसे पूर्ण निकलने पर पूर्ण ही शेष रहता है।

७. ॐभद्रं कर्णेभिः श्रृणुयाम देवाः ।
भद्रं पश्येमाक्षभिर्यजत्राः ।
स्थिरैरङ्गैस्तुष्टुवा॰ सस्तनूभिः ।
व्यशेम देवहितं यदायुः ।।

७. हे देवगण! हम अपने कर्णोंसे शुभही शुभ सुनें तथा यज्ञ करते हुये हम अपनें नेत्रोंसे शुभही शुभ देखें। अपने दृढ अङ्गवाली देहसे देवस्तुति करते हुये हम अपनी ईश्वरदत्त आयुको प्राप्त करें।

८. ॐ सह नाववतु सहनौ भुनक्तु
सहवीर्यं करवावहै । तेजस्विना-
वधीतमस्तु मा विद्विषावहै ।
ॐ शान्तिः शान्तिः शान्तिः ।।

८. हम एक दूसरेकी रक्षा करें तथा हम एकसाथ उपभोग करें। हमारा अध्ययन तेजस्वी हो। हम परस्पर द्वेष न करें। शान्ति। शान्ति। शान्ति।

१. मूर्खो हि जल्पतां पुंसाँ श्रुत्वा वाचः शुभाशुभाः ।
अशुभं वाक्यमादत्ते पुरीषमिव सूकरः ॥ १ । ७४ । ९०

२. न जातु कामः कामानामुपभोगेन शाम्यति ।
हविषा कृष्णवर्त्मेव भूय एवाभिवर्धते ॥ १ । ७५ । ५०

३. सर्वथा संहतैरेव दुर्बलैर्बलवानपि ।
अमित्रः शक्यते हन्तुं मधुहा भ्रमरैरिव ॥ ३ । ३३ । ७०

४. शीलं प्रधानं पुरुषे तद्यस्येह प्रणश्यति ।
न तस्य जीवितेनार्थो न धनेन न बन्धुभिः ॥ ५ । ३४ । ४८

५. कर्मण्येवाधिकारस्ते मा फलेषु कदाचन ।
मा कर्मफल-हेतुर्भूर्मा ते सङ्गोस्त्वकर्मणि ॥ ६ । २६ । ४७

६. यद्यदाचरति श्रेष्ठस्त त्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोकस्तदनुवर्तते ॥ ६ । २७ । २१

७. न बुद्धिभेदं जनयेदज्ञानां कर्मसङ्गिनाम् ।
जोषयेत्सर्वकर्माणि विद्वान्युक्तः समाचरन् ॥ ६ । २७ । २६

८. श्रेयान्स्वधर्मो विगुणः परधर्मात्स्वनुष्ठितात् ।
स्वधर्मे निधनं श्रेयः परधर्मो भयावहः ॥ ६ । २७ । ३५

९. श्रद्धावाँल्लभते ज्ञानं तत्परः संयतेन्द्रियः ।
ज्ञानं लब्ध्वा परां शान्तिमचिरेणाधिगच्छति ॥ ६ । २८ । ३९

१०. उद्धरेदात्मनात्मानं नात्मानमवसादयेत् ।
आत्मैव ह्यात्मनो बन्धुरात्मैव रिपुरात्मनः ॥ ६ । ३० । ५

११. त्रिविधं नरकस्येदं द्वारं नाशनमात्मनः ।
कामः क्रोधस्तथा लोभस्तस्मादेतत्त्रयं त्यजेत् ॥ ६ । ४० । २१

१२. यः शास्त्रविधिमुत्सृज्य वर्तते कामकारतः ।
न स सिद्धिमवाप्नोति न सुखं न परां गतिम् ॥ ६ । ४० । २३

१३. यादृशं वपते बीजं क्षेत्रमासाद्य कर्षकः ।
सुकृते दुष्कृते वाऽपि तादृशं लभते फलम् ॥ १३ । ६ । ६

१४. वाक्सायका वदनान्निष्पतन्ति यैराहतः शोचति रात्र्यहानि ।
परस्य नामर्मसु ये पतन्ति तान्पण्डितो नावसृजेत्परेषु ॥
१३ । १०४ । ३२

१. तपः स्वाध्याय-निरतं तपस्वी वाग्विदांवरम् ।
नारदं परिपप्रच्छ वाल्मीकिर्मुनिपुंगवम् ॥ १ । १ । १
२. कोन्वस्मिन्साम्प्रतं लोके गुणवान्कश्च वीर्यवान् ।
धर्मज्ञश्च कृतज्ञश्च सत्यवान्को दृढव्रतः ॥ १ । १ । २
३. चारित्रेण च को युक्तः सर्वभूतेषु को हितः ।
विद्वान्कः कः समर्थश्च कश्चैक-प्रियदर्शनः ॥ १ । १ । ३
४. आत्मवान्को जितक्रोधो द्युतिमान्कोऽनसूयकः ॥ १ । १ । ४
एतदिच्छाम्यहं श्रोतुं परं कौतूहलं हि मे ॥ १ । १ । ५
५. श्रुत्वैतत्त्रिलोकज्ञो वाल्मीकेर्नारदो वचः ।
श्रूयतामिति चामन्त्र्य प्रहृष्टो वाक्यमब्रवीत् ॥ १ । १ । ६
६. बहवो दुर्लभाश्चैव ये त्वया कीर्तिता गुणाः ।
मुने वक्ष्याम्यहं बुध्द्वा तैर्युक्तः श्रूयतां नरः ॥ १ । १ । ७
७. इक्ष्वाकु-वंश-प्रभवो रामो नाम जनैः श्रुतः ।
स सर्वगुणोपेतः कौसल्यानन्दवर्धनः ॥ १ । १ । १७

वनागमन-समये लक्ष्मणं प्रति सुमित्राया उक्ति--

८. रामं दशरथ विध्दि मां विध्दि जनकात्मजाम् ।
अयोध्यामटवीं विध्दि गच्छ तात यथासुखम् ॥ २ । ४० । ९

राज्यं परिपालयितुम् अनुनयन्तं भरतं प्रति रामस्य उक्ति--

९. लक्ष्मीश्चन्द्रादपेयाद्वा हिमवान्वा हिमं त्यजेत् ।
अतीयात्सागरो वेलां न प्रतिज्ञामहं पितुः ॥ २ । ११२ । १८

सीतालङ्काराणि प्रत्यभिज्ञातुं सूचितवन्तं रामं प्रति लक्ष्मणस्य उक्ति—

१०. नाहं जानामि केयूरे नाहं जानामि कुण्डले ।
नूपूरे त्वभिजानामि नित्यं पादाभिवन्दनात् ॥ ४ । ६ । २२
११. नत्यतो धर्मचरणं किंचिदस्ति महत्तरम् ।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ॥ २ । १९ । २२
१२. न चिरं पापकर्माणः क्रूरा लोक-जुगुप्सिताः ।
ऐश्वर्यं प्राप्य तिष्ठन्ति शीर्णमूला इव द्रुमाः ॥ ३ । २९ । ७
१३. उत्साहो बलवानार्य नास्त्युत्साहसमं बलम् ।
सोत्साहस्य हि लोकेषु न किंचिदपि दुर्लभम् ॥ ४ । १ । १२१
१४. न हि प्रतिज्ञां कुर्वन्ति वितथां सत्यवादिनः ।
लक्षणं हि महत्त्वस्य प्रतिज्ञा-परिपालनम् ॥ ६ । १०२ । ५१

१. श्रुति-स्मृत्युदितं धर्ममनुतिष्ठन् हि मानवः ।
इह कीर्तिमवाप्नोति प्रेत्यचानुत्तमं सुखम् ॥ २ । ९

२. श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रं तु वै स्मृतिः ।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ ॥ २ । १०

३. वेदः स्मृतिः सदाचारः स्वस्य च प्रियमात्मनः ।
एतच्चतुर्विधं प्राहुः साक्षाद्धर्मस्य लक्षणम् ॥ २ । १२

४. अभिवादयेद्वृद्धांश्च दद्याच्चैवासनं स्वकम् ।
कृताञ्जलिरुपासीत गच्छतः पृष्ठतोऽन्वियात् ॥ ४ । १५४

५. अभिवादनशीलस्य नित्यं वृद्धोपसेविनः ।
चत्वारि तस्य वर्धन्ते आयुर्विद्या यशो बलम् ॥ २ । १२१

६. चक्रिणो दशमीस्थस्य रोगिणो भारिणः स्त्रियाः ।
स्नातकस्य च राज्ञश्च पन्था देयो वरस्य च ॥ २ । १३८

७. विषादप्यमृतं ग्राह्यं बालादपि सुभाषितम् ।
अमित्रादपि सद्वृत्तममेध्यादपि काञ्चनम् ॥ २ । २३९

८. नाप्सु मूत्रं पुरीषं वा ष्ठीवनं वा समुत्सृजेत् ।
अमेध्यलिप्तमन्यद्वा लोहितं वा विषाणि वा ॥ ४ । ५६

९. बालातपः प्रेतधूमो वर्ज्यं भिन्नं तथासनम् ।
न च्छिन्द्यान्नख-लोमानि दन्तैर्नोत्पाटयेन्नखान् ॥ ४ । ६९

१०. हीनाङ्गानतिरिक्ताङ्गान् विद्याहीनान्वयोऽधिकान् ।
रूप-द्रव्य-विहीनांश्च जातिहीनांश्च नाक्षिपेत् ॥ ४ । १४१

११. यद्यत्परवशं कर्म तत्तद्यत्नेन वर्जयेत् ।
यद्यदात्मवशं तु स्यात्तत्तत्सेवेत यत्नतः ॥ ४ । १५९

१२. सर्वं परवशं दुःखं सर्वमात्मवशं सुखम् ।
एतद्विद्यात्समासेन लक्षणं सुखदुःखयोः ॥ ४ । १६०

१३. यत्कर्म कुर्वतोऽस्य स्यात्परितोषोऽन्तरात्मनः ।
तत्प्रयत्नेन कुर्वीत विपरीतं तु वर्जयेत् ॥ ४ । १६१

१४. यत्र नार्यस्तु पूज्यन्ते रमन्ते तत्र देवताः ।
यत्रैतास्तु न पूज्यते सर्वास्तत्राफलाः क्रियाः ॥ ३ । ५६

१५. सन्तुष्टो भार्यया भर्ता भर्ता भार्या तथैव च ।
यस्मिन्नेव कुले नित्यं कल्याणं तत्र वै ध्रुवम् ॥ ३ । ६०

सिंह :—

१. अलं महीपाल तव श्रमेण प्रयुक्तमप्यस्त्रमितो वृथा स्यात् ।
न पादपोन्मूलनशक्ति रंहः शिलोच्चये मूर्छति मारुतस्य ॥३४॥

२. कैलासगौरं वृषमारुरुक्षोः पादार्पणानुग्रहपूतपृष्ठम् ।
अवेहि मां किंकरमष्टमूर्तेः कुम्भोदरं नाम निकुम्भमित्रम् ॥३५॥

३. अमुं पुरः पश्यसि देवदारुं पुत्रीकृतोऽसौ वृषभध्वजेन ॥३६॥

कण्डूयमानेन कटं कदाचिद्वन्यद्विपेनोन्मथिता त्वगस्य ॥३७॥

४. तदाप्रभृत्येव वनद्विपानां त्रासार्थमस्मिन्नहमद्रिकुक्षौ ।
व्यापारितः शूलभृता विधाय सिंहत्वमङ्कागतसत्ववृत्ति ॥३८॥

५. तस्यालमेषा क्षुधितस्य तृप्त्यै प्रदिष्टकाला परमेश्वरेण ।
उपस्थिता शोणितपारणा मे सुरद्विषश्चान्द्रमसी सुधेव ॥३९॥

६. स त्वं निवर्तस्व विहाय लज्जां गुरोर्भवान्दर्शित-शिष्यभक्तिः ।
शस्त्रेण रक्ष्यं यदशक्यरक्षं न तद्यशः शस्त्रभृतां क्षिणोति ॥४०॥

नृप :—

७. मान्यः स मे स्थावर जङ्गमानां सर्ग-स्थिति-प्रत्यवहार- हेतुः ।
गुरोरपीदं धनमाहिताग्नेर्नश्यत्पुरस्तादनुपेक्षणीयम् ॥४४॥

८. स त्वं मदीयेन शरीरवृत्तिं देहेन निर्वर्तयितुं प्रसीद ।
दिनावसानोत्सुक-बाल-वत्सा विसृज्यतां धेनुरियं महर्षेः ॥४५॥

सिंह :—

९. एकातपत्रं जगतः प्रभुत्वं, नवं वयः, कान्तमिदं वपुश्च ।
अल्पस्य हेतोर्बहु हातुमिच्छन्विचारमूढः प्रतिभासि मे त्वम् ॥४७॥

१०. अथैकधेनोरपराधचण्डाद्गुरोः कृशानुप्रतिमाद्बिभेषि ।
शक्योऽस्य मन्युर्भवता विनेतुं गाः कोटिशः स्पर्शयता घटोघ्नीः ॥४९॥

११. तद्रक्ष कल्याणपरम्पराणां भोक्तारमूर्जस्वलमात्मदेहम् ।
महीतल-स्पर्शनमात्रभिन्नमृद्धं हि राज्यं पदमैन्द्रमाहुः ॥५०॥

नृप :—

१२. कथं नु शक्योऽनुनयो महर्षेर्विश्राणनाच्चान्यपयस्विनीनाम् ।
इमामनूनां सुरभेरवेहि रुद्रौजसा तु प्रहृतं त्वयाऽस्याम् ॥५४॥

१३. सेयं स्वदेहार्पणनिष्क्रयेण न्याय्या मया मोचयितुं भवत्तः ।
न पारणा स्याद्विहता तवैवं भवेदलुप्तश्च मुनेः क्रियार्थः ॥५५॥

१४. किमप्यहिंस्यस्तव चेन्मतोऽहं यशःशरीरे भव मे दयालुः ।
एकान्तविध्वंसिषु मद्विधानां पिण्डेष्वनास्था खलु भौतिकेषु ॥५७॥

१५. तथेति गामुक्तवते दिलीपः सद्यः प्रतिष्टम्भविमुक्तबाहुः ।
स न्यस्तशस्त्रो हरये स्वदेहमुपानयत्पिण्डमिवामिषस्य ॥५९॥

दुर्योधन-प्रमुख-शत्रुभिः राज्य-शासने लब्धां सिध्दिं वनेचर-मुखात् श्रुत्वा द्रौपदी आत्मनः विकारान् निरोध्दुम् असमर्था अभवत्। युधिष्ठिर-नृपस्य कोपम् उद्योगं च उद्दीपयितुम् इमाः वाचः उवाच—

१. भवादृशेषु प्रमदाजनोदितं भवत्यधिक्षेप इवानु शासनम् ।
तथाऽपि वक्तुं व्यवसाययन्ति मां
निरस्त-नारी-समया दुराधयः ॥ १ । २८

२. व्रजन्ति ते मूढ-धियः पराभवं । भवन्ति मायाविषु ये न मायिनः ।
प्रविश्य हि घ्नन्ति शठास्तथाविधानसंवृताङ्गा
न्निशिताइवेषवः ॥ १ । ३०

३. गुणानुरक्तामनुरक्त-साधनः कुलाभिमानी कुलजां नराधिपः ।
परैस्त्वदन्यः क इवापहारयेन्मनोरमामात्म-वधूमिव श्रियम्॥१।३१

४. भवन्तमेतर्हि मनस्वि-गर्हिते विवर्तमानं नरदेव वर्त्मनि ।
कथं न मन्युर्ज्वलयत्युदीरितः
शमीतरुं शुष्कमिवाग्निरुच्छिखः ॥ १ । ३२

५. अवन्ध्यकोपस्य विहन्तुरापदां । भवन्ति वश्याः स्वयमेव देहिनः।
अमर्षशून्येन जनस्य जन्तुना। न जातहार्देन न विद्विषादरः॥१।३३

६. विहाय शान्तिं नृप! धाम तत्पुनः। प्रसीद सन्धेहि वधाय विद्विषाम्।
व्रजन्ति शत्रूनवधूय निःस्पृहाः ।
शमेन सिध्दिं मुनयो न भूभृतः ॥ १ । ४२

७. अथ क्षमामेव निरस्त-विक्रम । श्चिराय पर्येषि सुखस्य साधनम् ।
विहाय लक्ष्मीपति-लक्ष्म कार्मुकं ।
जटाधरः सञ्जुहुधीह पावकम् ॥ १ । ४४

(महाकवि–श्री० माघ-प्रणीत-महाकाव्यम् एतत्। षोडश सर्गतः श्लोकाः)

१. दमघोष-सुतेन कश्चन प्रतिशिष्टः प्रतिभानवानथ।
उपगम्य हरिं सदस्यदः स्फुट-भिन्नार्थमुदाहरद्वचः ॥ १ ॥

दूतः—

२. अभिधाय तदा तदप्रियं शिशुपालोऽनुशयं परं गतः।
भवतोऽभिमना समीहते सरुषः कर्तुमुपेत्य माननम् ॥ २ ॥

३. प्रणतः शिरसा करिष्यते सकलैरेत्य समं धराधिपैः।
तव शासनमाशु भूपतिः परवानद्य यतस्तवैव सः ॥ ४ ॥

५. समरेषु रिपून्विनिघ्नता शिशुपालेन समेत्य संप्रति।
सुचिरं सर्व-सात्वतैर्भव विश्वस्त-विलासिनी-जनः ॥ १४ ॥

कृष्णः—

६. प्रकटं मृदु नाम जल्पतः परुषं सूचयतोऽर्थमन्तरा।
शकुनादिव मार्गवर्तिभिः पुरुषादुद्विजितव्यमीदृशात् ॥ १९ ॥

७. हरिरर्चितवान्स भूपतिर्यदि राज्ञस्तव कोऽत्र मत्सरः।
न्यसनाय ससौरभस्य कस्तरुसूनस्य शिरस्यसूयति ॥ २० ॥

८. परितप्यत एव नोत्तमः परितप्तोऽप्यपरः सुसंवृतिः।
परिवृद्धिभिराहितव्यथः स्फुट-निर्भिन्न-दुराशयोऽधमः ॥ २३ ॥

९. जित-रोष-रया महाधियः सपदि क्रोधजितो लघुर्जनः।
विजितेन जितस्य दुर्मतेर्मतिमद्भिः सह का विरोधिता ॥ २६ ॥

१०. वचनैरसतां महीयसो न खलु व्येति गुरुत्वमुद्धतैः।
किमपैति रजोभिरौर्वरैरवकीर्णस्य मणेर्महार्घता ॥ २७ ॥

११. परितोषयिता न कश्चन स्वगतो यस्य गुणोऽस्ति देहिनः।
पर-दोष-कथाभिरल्पकः स्वजनं तोषयितुं किलेच्छति ॥ २८ ॥

१२. सहजान्ध-दृशः स्व-दुर्नये पर-दोषेक्षण-दिव्य-चक्षुषः।
स्व-गुणोच्च-गिरो मुनि-व्रताः पर-वर्ण-ग्रहणेष्वसाधवः ॥ २९ ॥

१३. किमिवाखिल-लोक-कीर्तितं कथयत्यात्मगुणं महामनाः।
वदिता न लघीयसोऽपरः स्वगुणं तेन वदत्यसौ स्वयम् ॥३१॥

१४. नरकच्छिदमिच्छतीक्षितुं विधिना येन स चेदिभूपतिः।
द्रुतमेतु न हापयिष्यते सदृशं तस्य विधातुमुत्तरम् ॥ ३३ ॥

१५. यदनर्गल-गोपुराननस्त्वमितो वक्ष्यसि किंचिदप्रियम्।
विवरिष्यति तच्चिरस्य नः समयोद्वीक्षण-रक्षितां क्रुधम् ॥ ३७॥

## १- चर्पटपञ्जरिकास्तोत्रम् ।

दिनमपि रजनी सायं प्रातः, शिशिरवसन्तौ पुनरायातः ।
कालः क्रीडति गच्छत्यायुस्तदपि न मुञ्चत्याशावायुः ॥ १ ॥
भज गोविन्दं भज गोविन्दं, भज गोविन्दं मूढमते ।
प्राप्ते संन्निहिते मरणे, नहि नहि रक्षति डुकृञ्करणे ॥ ध्रु० ॥
अग्रे वह्निः पृष्ठे भानू, रात्रौ चिबुकसमर्पितजानुः ।
करतलभिक्षा तरुतलवासस्तदपि न मुञ्चत्याशापाशः ॥ २ ॥
जटिलो मुण्डी लुञ्चितकेशः, काषायाम्बरबहुकृतवेषः ।
पश्यन्नपि च न पश्यति मूढ, उदरनिमित्तं बहुकृतवेषः ॥ ३ ॥
भगवद्गीता किंचिदधीता, गङ्गाजललवकणिका पीता ।
सकृदपि यस्य मुरारिसमर्चा, तस्य यमः किं कुरुते चर्चाम् ॥ ४ ॥
अङ्गं गलितं पलितं मुण्डं, दशनविहीनं जातं तुण्डम् ।
वृद्धो याति गृहीत्वा दण्डं, तदपि न मुञ्चत्याशापिण्डम् ॥ ५ ॥
पुनरपि जननं पुनरपि मरणं, पुनरपि जननीजठरे शयनम् ।
इह संसारे खलु दुस्तारे, कृपयाऽपारे पाहि मुरारे ॥ ६ ॥
पुनरपि रजनि पुनरपि दिवसः, पुनरपि पक्षः पुनरपि मासः ।
पुनरप्ययनं पुनरपि वर्षं, तदपि न मुञ्चत्याशामर्षम् ॥ ७ ॥
गेयं गीतानामसहस्रं, ध्येयं श्रीपतिरूपमजस्रम् ।
नेयं सज्जनसंगे चित्त, देयं दीनजनाय च वित्तम् ॥८॥ भज गो०॥

## देव्यपराधक्षमापनस्तोत्रम् ।

जगन्मातर्मातस्तव चरणसेवा न रचिता
न वा दत्तं देवि द्रविणमपि भूयस्तव मया ।
तथापि त्वं स्नेहं मयि निरुपमं यत्प्रकुरुषे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥१॥
पृथिव्यां पुत्रास्ते जननि बहवः सन्ति सरलाः
परं तेषां मध्ये विरलतरलोऽहं तव सुतः ।
मदीयोऽयं त्यागः समुचितमिदं नो तव शिवे
कुपुत्रो जायेत क्वचिदपि कुमाता न भवति ॥२॥
आपत्सु मग्नः स्मरणं त्वदीयं करोमि दुर्गे करुणार्णवेशि ।
नैतच्छठत्वं मम भावयेथाः क्षुधातृषार्ता जननीं स्मरन्ति ॥३॥
जगदम्ब विचित्रमत्र किं परिपूर्णा करुणास्ति चेन्मयि ।
अपराधपरम्परावृतं न हि माता समुपेक्षते सुतम् ॥४॥
मत्समः पातकी नास्ति पापघ्नी त्वत्समा न हि ।
एवं ज्ञात्वा महादेवि यथा योग्यं तथा कुरु ॥५॥

१. अयि दलदरविन्द स्यन्दमानं मरन्दं
तव किमपि लिहन्तो मञ्जु गुञ्जन्तु भृङ्गाः ।
दिशि दिशि निरपेक्षस्तावकीनं विवृण्वन्
परिमलमयमन्यो बान्धवो गन्धवाहः ॥ ४ ॥
२. याते मय्यचिरा न्निदाघ-मिहिर-ज्वाला-शतैः शुष्कतां
गन्ता कं प्रति पान्थ-सन्ततिरसौ सन्तापमालाकुला ।
एवं यस्य निरन्तराधि-पटलैर्नित्यं वपुः क्षीयते
धन्यं जीवनमस्य मार्गसरसो धिग्वारिधीनां जनुः ॥ १८ ॥
३. आपेदिरेऽम्बरपथं परितः पतङ्गा
भृङ्गा रसाल-कुसुमानि समाश्रयन्ते ।
संकोचमञ्चति सरस्त्वयि दीनदीनो
मीनोनु हन्त कतमां गतिमभ्युपैतु ॥ १६ ॥
४. इयत्यां सम्पत्तावपि च सलिलानां त्वमधुना
न तृष्णामार्तानां हरसि यदि कासार सहसा ।
निदाघे चण्डांशौ किरति परितोऽङ्गार-निकरान्
कृशीभूतः केषामहह परिहर्तासि खलु ताम् ॥ ४१ ॥
५. भुक्ता मृणाल-पटली भवता निपीता—
न्यम्बूनि यत्र नलिनानि निषेवितानि ।
रे राजहंस वद तस्य सरोवरस्य
कृत्येन केन भवितासि कृतोपकारः ॥४५॥
गङ्गा -लहरीतः—( जनि-मरण-शोकापहरण-तीरां गङ्गाम् उद्दिश्य- )
६. विधत्तां निःशङ्कं निरवधि-समाधिं विधिरहो
सुखं शेषे शेतां हरिरविरतं नृत्यतु हरः ।
कृतं प्रायश्चित्तैरलमथ तपोदान-यजनैः ।
सवित्री कामानां यदि जगति जागर्षि जननि ॥२३॥
७. विलीनो वै वैवस्वत-नगर-कोलाहल-भरो
गता दूता दूरं क्वचिदपि परेतान् मृगयितुम् ।
विमानानां व्रातो विदलयति वीथिर्दिविषदां
कथा ते कल्याणी यदवधि महीमण्डलमगात् ॥ २५ ॥

# शब्दार्थ सूची ।

## महाभारतम्

जल्पत्--बोलनेवाला पुरीषम्—मल जातु—कोई समय हविस्--आहुति
कृष्णवर्त्म--अग्नि मधुहन्--मध जुष् सङ्गः--संबन्ध
अवसद् (णिच) —नाश कर० कामकारतः--स्वेच्छानुसार वप्--बोना
आसाद्य-- पाकर

## रामायणम्

जुगुप्सित—निंदित शीर्ण--टूटी फूटी द्रुम—वृक्ष वितथ--असत्य
अटवी—अरण्य विद्ऽ--जान० लक्ष्मीः--सौंदर्य अति+इऽ--उल्लंघन कर०
वेला--समुद्रकिनारा केयूरम्--बाजूबंद नूपुरं--पैजनी अभिज्ञा—पहिचानना
निरत—तत्पर पुङ्गवः--श्रेष्ठ

## मनुस्मृतिः

उदित--कथित प्रेत्य--मरणोत्तर अमीमांस्य—चर्चा के अयोग्य
निर्बभौ--उत्पन्न हुआ अभिवद् ( णिच् )--वंदन कर० चक्रिन्--वाहनारूढ
दशमीस्थ--९० से उपर आयुवाला स्नातक--ब्रह्मचर्यव्रत समापित
अमेध्यं--अपवित्र ष्ठीवनं--थूंकना लोहितम्--रक्त० आतपः--धूप
अतिरिक्त--अधिक अङ्गम्—अवयव आ+क्षिप् ६--अपमान कर०
ध्रुवम्—शाश्वत

## रघुवंशम्

गह्वरः--गुहा आ+विश् ६--प्रवेश कर० तस्थिवस्—बैठा हुआ
स्तम्भित—निचेष्ट किया हुआ गद् १--बोल० रंहस्--वेग
शिलोच्चयः--पर्वत मूर्च्छ १--परिणाम कर० मारुतः--वायु गौर--श्वेत
आरुरुक्षु--आरोहणेच्छु पूत--पवित्र अव+इऽ--जान० अष्टमूर्तिः—शंकर
देवदारुः--देवदार पुत्रीकृत—पुत्र सदृश मान० वृषभध्वजः—शंकर
कण्डूयमान--खुजलानेवाला कटः—गण्डस्थल द्विपः—गज
उन्मथित--खरोची गई त्वच--छाल त्रासः—भय कुक्षिःऽ—गुहा
व्यापारित--नियुक्त शूलभृत्—शंकर अङ्कः--समीप सत्वं--प्राणी
वृत्तिः--चरितार्थ प्रदिष्ट--दर्शित कालः--मृत्युसमय शोणितं—रक्त
पारणा--व्रतान्त भोजन सूरद्विष्--राहु शस्त्रभृत्--शस्त्रधारण
क्षि (क्षिणाति)—क्षीण हो० सर्गः—उत्पत्ति स्थितिः—अस्तित्व
प्रत्यवहारः—प्रलय आहिताग्निः—अग्निहोत्री निर्वर्तयितुं—निपटनेके लिए
निर्वर्तयितुं प्रसीद—कृपाकर निपट लो अवसानम्—समाप्ति आतपत्रं—छत्र
कान्त—सुंदर वपुस्—शरीर हातुम्—त्यागनेको प्रति+भाऽ—दिख०

कृशानुप्रतिम—अग्निसदृश मन्युः—कोप विनेतुम्—नष्ट करनेके लिए
स्पर्शयत्—ज्ञान देनेवाला घटोघ्नीः—बडी ऊधवाली उर्जस्वल—सामर्थ्य संपन्न
ऋद्ध—समृद्ध ऐन्द्र—इन्द्रका अनुनयः—सांत्वन विश्राणनम्—दान
पयस्विनी—गाय अनूना—बराबरीकी ओजस्—सामर्थ्य तेज रुद्रः—शंकर
सुरभि—कामधेनु निष्क्रयः—मूल्य विहत—भग्न एकान्त—अतिशय
पिण्डः—शरीर अनास्था—उदासीनता भौतिक—पंचभूतात्मक
प्रतिष्टम्भ—प्रतिबंध उप+आ+नी१—अर्पण कर० आमिणम्—मांस

## किरातार्जुनीयम्

वनेचरः—भिल्ल उद्दीपयितुं—प्रखर करनेको प्रमदा—तरुणी
अधिक्षेप—निंदा अनुशासनम्—उपदेश व्यवसाययन्ति—प्रवृत्त कर
निरस्त—फेंका हुआ समयः—रुढि आधिः—मनोव्यथा व्रज् १प.—जा०
मायाविन्—कपटी मायिन्—कपटी संवृत—ढका हुआ निशित—तीक्ष्ण
इषुः—बाण अनुरक्त—आसक्त कुलज—कुलीन अपहृ (णिच)—लुटाना
मनस्विन्—सुज्ञ गर्हित—निन्दित विवर्तमान—चलनेवाला वर्त्मन्—मार्ग
ज्वल् (णिच्)—प्रज्वलित हो० उत्+ईरित—प्रक्षुब्ध किया हुआ
उच्छिख—ऊर्ध्वज्वाला वन्ध्य—निष्फल विहन्तृ—नाशकरनेवाला
आपद्—आपत्ति वश्य—स्वाधीन अमर्षः—क्रोध जन्तुः—प्राणी
हार्दम्—प्रेम विद्विश्—शत्रु दरः—भीति अवधूय—नाशकरके
शमः—शान्ति भूभृत्—राजा परि+इ२—जानना विहाय—छोडकर
लक्ष्मीपति—राज लक्ष्म—चिह्न कार्मुकम्—धनुष
हु (जुहोति) ३—आहुति पावकः—अग्नि

## शिशुपालवध

दमघोषसुतः—शिशुपाल प्रतिशिष्ट—प्रेषित प्रतिभानवत्—प्रतिभासम्पन्न
सदस्—सभा अदस्—वह उद्+आ+हृ१—बोलना अभि+धा२—बोलना
अनुशयः १-१ अनुताप २ दीर्घद्वेश अभिमनस्-१ उत्कंठितचित्त २ निर्भय चित्तवाला
सम+ईह् १—चाहना रुष्—कोप माननम्—१ पूजा २ हनन
आ+इ+त्य—आकर शासनम्—१ आज्ञा २ दंड ( शिक्षा )
परवत्—१ अधीन २ शत्रुमान घन—१ मेघ २ घन जाल—समूह
निभ—सदृश दुरासद—दुष्प्रवेश नागः—१ हत्ती २ सर्प
मृगादिः—मृग इत्यादि २ मृग भक्षक समेत्य—१ समेटकरकर २ भिडकर
सात्वतः—यादव विश्वस्त—१ विश्रब्ध २ विधवा विलासिनी—स्त्री
परुष—अप्रिय अन्तरा—अन्दर शकुनः—पक्षि मार्गवर्तिन्—सन्मार्गी
उद्+विज्—डरना न्यसनः—रखनेवाला असूयति—असूयाकरना
संवृतिः—छुपाकर रखना आहित—उत्पादित दुराशयः—दुष्टात्मा

रोषः--क्रोध रयः--वेग जोर सपदि--तत्काल लघु--क्षुद्र
वि+इऽ--नष्ट होना उद्धत--निष्ठुर अप+इऽ--निकलजाना
रजस--धूलि और्वर--भूमिजन्य अवकीर्ण--आच्छादित दुर्नयः--दोष
वर्णः--स्तुतिवचन नरकच्छिद--नरकान्तक विधि--प्रकार
न हापयिष्यन--विलंब न होगा अनर्गल--बिनाप्रतिबंध गोपुरम्--पुरद्वार
विचरिष्यति-प्रकट करेगा चिरस्य-दीर्घकाल समय-करार क्रुध् (स्त्री)-क्रोध

## चर्पट पंजरिका स्त्रोत्रम्

रजनी--निशा शिशिरः--शीतकाल वसन्तः--वसन्तकाल
आ+याऽ--आना (येणें) आयुस्--आयु सन्निहित--निकट
डुकृञ्करणे--पाणिनीय सूत्र चिबुकः--गाल जानुः--घुटना पाशः--जाल
जटिल--जटावाला मुण्डिन्--क्षौर किया हुआ लुञ्चित--उखाडा हुआ
काषाय--भगवा अम्बरम्--वस्त्र लव--बिंदु कणिका--कण
पीता--प्राशन की सकृत्--एकबार गलित--गला हुआ पलित--श्वेत हुआ
तुण्डम्--मुख मुच् (मुञ्चति) १--छोड पा (पाति) २--रक्षण कर०
अयन-दक्षिणोत्तरायण अजस्त्रम्-निरंतर द्रविणम्-धन भू (णिच्)-मान०

## भामिनी विलासम्

दलद्--विकसता हुआ अरविन्दम्--कमल स्यन्दमान--गलता हुआ
मरन्दः--पुष्पमध लिह्ऽ--चाख० मञ्जु--मधुर गुञ्ज्--गूंज
भृङ्ग--भ्रमर दिश् (स्त्री)--दिशा तावकीन--तुम्हारा
विवृण्वत्-दिखाता हुआ परिमलः-सुगन्ध गन्धवाहः--वायु निदाघ-ग्रीष्मऋतु
मिहिरः--सूर्य सन्ततिः--समूह माला--परंपरा आकुल--व्याकुल
आधिः--मनोव्यथा पटलम्--समूह सरस्--सरोवर वारिधिः--समुद्र
जनुः--जन्म आ+पद--विपत्ति पतङ्ग--पक्षी रसालः--आम्रवृक्ष
संकोच--घट० अञ्च्१--जा० कतम--कोनसा अभि+उप+इ२--शरण जा०
इयती--इतनी तृष्णा--प्यास आर्त--दुःखी सलिलम्--जल
कासारः--सरोवर चण्डांशुः--सूर्य कॄ (किरति) ६--बरस०
अङ्गार--अग्नि निकरः--समूह अहह--अरेरे खलु--सचमुच
भुक्ता--भक्षण की मृणाल--कमल तंतु पटली--समूह अम्बु--जल
नलिनं--कमल निषेवित--सेवन कीई जनिः--जन्म वि+धाऽ--कर०
अवधिः--मर्यादा शी (शेते) २--निद्राकर० अविरतम्--अखण्ड
कृतम् (अ)--पर्याप्त अलम् (अ)--पर्याप्त (बस) यजनम्--यज्ञ कर०
सवित्री--बरसानेवाली कामः--इच्छा जागृ (जार्गति) २--जागरण कर०
जननी--माता विलीन--नष्ट वैवस्वत--यम कोलाहलः--कोलाहल
भरः--आधिक्य परेत--मृत मृगयितुम्--खोजनेको व्रातः--समूह
वि+दल१०-फोड० वीथिः--मार्ग दिविषद--देव कल्याणी--सुन्दर मंगल

संस्कृत-भाषा-प्रचारि-सभायाः

# मौखिक-संस्कृत-परीक्षाः

संस्कृत-भाषाप्रचारि-सभायाः निम्न-लिखित-मौखिक-परीक्षाः प्रतिवर्षं भविष्यन्ति। एताः सर्वाः परीक्षाः मौखिक्यः एव वर्तन्ते। परीक्षाः प्रतिवर्षं द्विवारं ख्रिस्ताब्दस्य प्रथमे मासि अष्टमे मासि च एवं (हेमन्तर्तौ वर्षर्तौ च) भविष्यन्ति। द्वयोः परीक्षयोः मध्ये भवेत् षण्मासानाम् अन्तरम्। नागपुर-स्थाः नागपुरात् बहिःस्थाः च परीक्षार्थिनः बाल-बालिकाः परीक्षार्हाः भवेयुः। परीक्षा-शुल्कं प्रतिछात्रं चतुराणकं केवलम्। यदि दशसंख्याधिकाः परीक्षार्थिनः आवेदन-पत्रं सर्वकार-मान्य-विद्यालयस्य मुख्याध्यापकद्वारा प्रेषयिष्यन्ति तर्हि परीक्षा-केन्द्रस्य आयोजनं मुख्याध्यापक-महाभागस्य सहकार्येण कर्तुं शक्यते। आवेदन-पत्राणि परीक्षाशुल्केन सह परीक्षा-मासस्य मासपूर्वं प्रेषणीयानि। आवेदन-पत्रे परीक्षार्थिनः नाम पितुः नाम, कुल-नाम, वयः, पाठशाला, निवास-स्थानं, केन्द्र नाम च लिखन्तु। परीक्षोत्तीर्णच्छात्रेभ्यः प्रमाण-पत्राणि प्रदीयन्ते यथासमयम्। श्रेणिगुणानां प्रतिशतता अधोलिखिता भवेत्—

| | |
|---|---|
| प्रथम-श्रेणिः | ८०-१०० |
| द्वितीय-श्रेणिः | ६०-७९ |
| तृतिय-श्रेणिः | ४०-५९ |
| प्रावीण्यम् | ९०-१०० |

एतासां परीक्षाणां नामानि अभ्यासक्रमः पुस्तक नामानि च अधः लिख्यन्ते। अभ्यास-क्रमान्तर्गतानां द्वादश-पाठ्य-पुस्तकानां मूल्यम् आणक-द्वयं प्रत्येकम्।

**प्रथम-परीक्षा-**

१. बालामृत-शतश्लोकी प्रथम-भागः*
२. सुलभ-शब्द-रूपावलिः*
३. व्यवहार प्रश्नोत्तरी*

**द्वितीय-परीक्षा-**

४. उपयुक्त-धातुरूपावलिः*
५. हितोपदेश-कथाः*
६. संक्षिप्तामरकोशः*
प्रथम-परीक्षायाः अभ्यासक्रमः च।

**तृतीय-परीक्षा-**

७. छात्रामृत-शतश्लोकी
८. रामायण-कथाः*
९. व्यवहार-सूक्तावलिः
द्वितीय-परीक्षायाः अभ्यासक्रमः च।

**संस्कृत-प्रवेश-परीक्षा-**

१०. महाभारत-कथाः
११. नाट्य-प्रवेशः
१२. कौमुदी-प्रवेशः
तृतीय-परीक्षायाः अभ्यासक्रमः च।

*मुद्रिताः
धर्मपीठम्,
नागपुरम् १

स. ना. कुलकर्णी
सं. भा. प्र. सभायाः
प्रमुख-कार्यवाहः



इयं पुस्तिका वर्धानगरस्थ-राष्ट्रभाषा-प्रचार-समितेः मुद्रणालये मुद्रिता नागपुरस्थ-संस्कृतभाषाप्रचारि-सभाद्वारा प्रमुख-कार्यवाहेन धर्मपीठे कुलकर्णी-भवने प्रकाशतां च नीता।

(8)

संस्कृत-भाषा-प्रचार-वाङ्मयमाला

# रामायण-कथा

( बालानां कृते )



श्रीमतां मोर-कुलावतंसानां
नरसिंगदास-महाभागानां
दानानुग्रह-फलम् इदम् ।

रचयिता—प्रा. दि. वि. वराडपांडे
एम्. ए.



अष्टमं पुष्पम् ]   १९५४   [ मूल्यम् आणक-द्वयम्

# हृद्गतम्

अखिले अपि भारतवर्षे न का अपि अपरा कथा तथा लोकप्रिया यथा श्रीराम-कथा। वाल्मीकिना विरचिते हि रामायणे रामस्य कथा साकल्येन विद्यते। रामायण-ग्रन्थस्य पठनं, रामकथायाः च चर्चा न केवलं भारतवर्षे किन्तु भारतात् बहिः अन्य-देशेषु अपि प्रवर्तते। रामकथायाः एतावत् लोकप्रियत्वं कस्मात् कारणात् भवेत्? रामः हि मर्यादा-पुरुषोत्तमः इति गण्यते। दैनंदिन-व्यवहारे रामः आत्मनः उज्ज्वल-चारित्र्येण आदर्श-पुरुषः इव मन्यते। तस्य बहवः अलौकिकाः गुणाः प्रशस्यन्ते जनैः। रामस्य पित्राज्ञापरिपालनम्, एकपत्नी-व्रतम् विमात्रादरः, प्रजाहितैक-दृष्टिः, सत्य-प्रतिज्ञत्वम्, इत्यादयः लोकोत्तराः गुणाः लोकानां मनांसि हरन्ति। सीतायाः आत्म-सुख-निरपेक्षा पति-भक्तिः, दुर्दम्योत्साहशक्तिः, सुग्रीवस्य मित्र-कार्य-निष्ठा, बिभीषणस्य सत्पक्ष-रतिः इत्यादयः तत्तद्व्यक्तेः आदर्शीभूताः गुणाः आह्लादयन्ति चेतः। रामकथासु लोकानाम् निरतिशयादरस्य कारणं प्रायः एते गुणाः एव। वाल्मीकिना एतेषां गुणानाम् आदर्शान् लोकानां पुरतः स्थापयित्वा महत् खलु उपकृतं जगत्।

अस्यां पुस्तिकायां प्रत्येकस्मिन् पाठे सुबोधभाषायां प्रथमं रामायण-कथा-खण्डः दत्तः, अनन्तरं पठनार्थं कस्यचित् प्रथितयशसः कवेः श्लोकः उद्धृतः यस्य पठनेन तत्पाठे प्रदत्तायाः कथायाः स्मृतिबद्धता सहजं साध्येत। ततः आगच्छन्ति केचन सुलभ-प्रश्नाः येषाम् उत्तराणि कथायाः छात्रकृतं सम्यक् बोधं द्योतयन्ति। प्रश्नानां पश्चात् कथायां प्रयुक्तानां कठिन-शब्दानाम् अर्थः मराठी-भाषायां हिन्दी-भाषायां च प्रदत्तः येन कथायाः अर्थबोधः सुकरः भवेत्।

भाषा भाषणाभ्यासेन एव आत्मसात् भवेत्। भाषणेन विना भाषायां पाटवं न लब्धुं शक्यते। अतः अध्यापकैः कथाधारेण विविधाः प्रश्नाः छात्रेभ्यः प्रष्टव्याः येन छात्राणाम् पर्याप्तः अभ्यासः उत्तरद्वारा प्रतिदिनं भाषाव्यवहारे भवेत्। भाषाव्यवहारेण एव भाषणशक्तेः संवर्धनम्। न विद्यते अन्यः सुलभः पन्थाः।

अनेन रामचरित्रस्य पठनेन छात्राणां चारित्र्यम् अपि उत्तरोत्तरं विशुद्धां समुन्नतिं व्रजेत् इति आशास्यते।

धर्मपीठम्, नागपुरम् १
वर्षप्रतिपदा, शके १८७६
दिनाङ्कः ४–४–५४

स. ना. कुलकर्णी
प्रमुख–कार्यवाह:
संस्कृत-भाषा-प्रचारिणी सभा

# रामायण-कथा

## १. आदि-काव्यस्य उत्पत्तिः

आसीत् कुत्रचित् वने कश्चित् नरघातकः[१]। सः पथिकानां धनापहारेण[२] जीविकां[३] निर्वर्तयति[३] स्म[३]। एकदा नारदोपदेशात् तस्य सद्बुद्धिः उत्पन्ना। न मम पुत्रदाराद्यः[४] मे पापेषु भागिनः[५] इति ज्ञात्वा ईश्वरनामजपेन ऋषित्वं प्राप्तः वाल्मीकिः इति ख्यातः च।

कदाचित् नित्यस्नानार्थं तमसां नदीं गच्छन् सः निषादेन[६] हतं क्रौञ्चम्[७] एकम् अपश्यत्। तत् दृष्ट्वा तस्य शोकः श्लोकरूपेण आविर्भूतः[८]।

"मा[९] निषाद प्रतिष्ठां त्वम् अगमः[९] शाश्वतीः[१०] समाः[१०]।
यत् क्रौञ्चमिथुनाद्[११] एकम् अवधीः[१२] काम-मोहितम्[१३]॥ इति

ततः ब्रह्मणा सः आद्यः कविः इति प्रशंसितः। तेन एव विरचितं श्रीरामचरितम् "आदिकाव्यं रामायणम्" इति प्रसिद्धम्। श्रीरामस्य अश्वमेधे यमलाभ्यां[१४] तच्छिष्याभ्यां प्रथमं प्रगीतं[१५] तत् पौरजानपदैः[१६] सह स-परिवारेण रामेण राज्ञा श्रुतम्। तस्य सुबोधा कथा संक्षेपेण श्रूयताम्।

पठनार्थं श्लोकः—

काव्यस्यात्मा स एवार्थस्तथा चादिकवेः पुरा।
क्रौञ्चद्वन्द्वावियोगोत्थः शोकः श्लोकत्वमागतः॥
(आनन्दवर्धनस्य)

प्रश्नाः—

१. कः नाम आदिकविः?
२. सः कथं ऋषिः अभवत्?
३. आदिकाव्यस्य कीदृशी उत्पत्तिः?
४. कः तत्काव्यस्य नायकः?

शब्दार्थाः—

१. माणसें मारणारा=मनुष्योंको मारनेवाला।
२. अपहार=चोरी।
३. पोट भरीत असे=पेट पालता था, (जीविकां निर्वर्तयति स्म-)
४. दार (नित्यबहुवचन)=स्त्री।
५. वाटेकरी=भागीदार।
६. भिल्ल।
७. एक पक्षी।
८. प्रगट झाला=प्रकट हुआ।
९. मा अगमः=जाऊं नकोस=मत जाओ।
१०. शाश्वतीः समाः=अनेक वर्ष।
११. मिथुन=जोड़ी।
१२. वध केला=मार डाला।
१३. प्रेमानें व्याकुळ=प्रेमसे विकल।
१४. जुळीं (भावंडें)=जुड़वा (भाई)।
१५. गाइलेलें=गाया गया।
१६. नागरिक व खेडूत=शहरी और देहाती।

## २. पराक्रमी दशरथः

क्षत्रियाणां द्वे कुले परम-श्रेष्ठे, चन्द्र-वंशः सूर्य-वंशः च। तत्र सूर्य-वंशे मनुः, इक्ष्वाकुः, सगरः, हरिश्चन्द्रः, रघुः इत्यादयः विविध-गुण-भूषिताः भारत-ललाम-भूताः[१] राजानः जाताः। तेषु रघोः नप्ता[२], अजस्य पुत्रः दशरथः महान् पराक्रमी नृपः अयोध्यायां शास्ति स्म[३]। स खलु मृगया-प्रियः[४], देव-सहायः[५] सत्य-प्रतिज्ञः[६] च आसीत्।

राक्षसैः पराभूताः देवाः तरुणं दशरथं साहाय्यं याचन्ते। शूरः सः सत्वरं गत्वा, युद्धे राक्षसान हत्वा च देवान् विजयिनः करोति। एकदा समरे तस्य रथस्य अक्षः[७] भग्नः[८], चक्रं च पतितम्। तदा तस्य राज्ञी कैकेयी अक्षम् उद्धृत्य[९] राक्षस-वधे सहाया अभवत्। तेन प्रसन्नः दशरथः तस्यै वरं दत्तवान्। सा तु 'काले[१०] याचिष्ये[११]' इति उक्तवती[१२]।

कदाचित् मृगयां कुर्वन् दशरथः अज्ञानतः श्रावण नाम पितृ-भक्तं कुमारं बाणेन अघातयत्[१३]। ततः मुमूर्षुणा[१४] तत्पित्रा दशरथः शप्तः[१५] 'पुत्रशोकेन ते मृत्युः भवेत्' इति। तेन विषण्णः[१६] इव सः कालं नयति स्म।

पठनार्थं श्लोकः—

स किल संयुगमूर्ध्नि सहायतां मघवतः प्रतिपद्य महारथः।
स्वभुजवीर्यमगापयदुच्छ्रितं सुरवधूरवधूतभयाः शरैः॥

(कालिदासस्य)

प्रश्नाः—

१. कस्मिन् वंशे दशरथः जातः?
२. के तस्य गुणाः?
३. तस्य पराक्रमं वर्णय।
४. सः कस्मात् विषण्णः इव कालं नयति स्म?

शब्दार्थाः—

१. शोभादायक
२. नातू=नाती
३. राज्य करी=राज करता था
४. शिकार
५. मदतगीर
६. सत्यवादी
७. आस=धुर
८. मोडला=टूटा
९. उचलून धरून=ऊंचा उठाकर
१०. (योग्य) वेळीं=समय (आने) पर
११. मागीन=मांगूंगी
१२ म्हणाली=बोली
१३. मारलें=मारा
१४. मरणोन्मुख
१५. शाप दिला=शाप दिया
१६. उदास

# ३. शूराः राजपुत्राः

राज्ञः दशरथस्य तिस्रः[१] राज्ञ्यः; ज्येष्ठा कौसल्या, मध्यमा सुमित्रा, कनिष्ठा च कैकेयी। सति अपि राज्ञी-त्रये, वृद्धत्वं यावत् अनपत्यः[२] एव आसीत् राजा दशरथः। अतः तेन पुत्र-कामेष्टिः[३] नाम यज्ञः कारितः[४]। तदन्ते देवता-प्रसादात् कौसल्यायां रामः, सुमित्रायां लक्ष्मण-शत्रुघ्नौ यमौ,[५] कैकेय्यां भरतः च इति चत्वारः पुत्राः समुत्पन्नाः। तेषां राजपुत्रोचितं राजनीति-धनुर्वेदादिषु शिक्षणं नृपेण कारितम्।

एकदा ऋषिः विश्वामित्रः स्व-मख[६]-रक्षार्थं शूरौ राम-लक्ष्मणौ नेतुम्[७] उपस्थितः। "बालौ इमौ" इति उक्त्वा[८] तद् न अनुमन्यते[९] राजा। वसिष्ठोपदेशात् तु उभौ अनुमतौ गन्तुम्। मार्गे ऋषिणा बलातिबले[१०] विद्ये ताभ्यां दत्ते। ततः आततायिनीं[११] ताटकां नाम राक्षसीं मारयित्वा स्व-शौर्यस्य परिचयः रामेण दत्तः। यज्ञे विघ्न-कारिणः राक्षसान् हत्वा उभाभ्याम् ऋषिः विश्वामित्रः संतोषितः।

पठनार्थं श्लोकः—

कौशिकेन स किल क्षितीश्वरो राममध्वर-विघात-शान्तये।
काकपक्षधरमेत्य याचितस्तेजसां हि न वयः समीक्ष्यते॥

(कालिदासस्य)

प्रश्नाः--

१. दशरथस्य कति पुत्राः? के च ते?
२. राम-लक्ष्मणयोः शौर्यं वर्णय।
३. विश्वामित्रेण ताभ्यां किं दत्तम्?
४. रामेण शौर्यस्य परिचयः कथं दत्तः?

शब्दार्थाः—

१. तीन (स्त्रीलिंग) — २. अपुत्र
३. मुलगा देणारा=पुत्र देनेवाला — ४. करविला=कराया
५. जुळीं=जुड़वा — ६. यज्ञ
७. नेण्यासाठीं=ले जानेके लिये. — ८. म्हणून=कहकर
९. अनुमति देतो=अनुमति देता. — १०. बला अतिबला (नामक विद्या)
११. हत्या करणारी=हत्यारी

# ४. विवाह-महोत्सवः

मिथिलायां राजर्षिः जनकः राज्यं करोति स्म। तस्य कन्या सीता अतीव-गुण-शालिनी सुन्दरी च आसीत्। तस्याः कृते शूरं वरं प्राप्तु-कामेन[१] जनकेन तस्याः स्वयंवरः उद्घोषितः[२]। पणः च स्वयंवरे अयम् आसीत् यत्—"शिवस्य यत् धनुः मम सकाशे[३] अस्ति, तस्य आरोपणे[४] पूरणे[५] च समर्थं राजपुत्रं सीता वृणुयात्[६]।"

विश्वमित्रः राम-लक्ष्मणौ गृहीत्वा[७] मिथिलां प्राप्तः। संमिलितेषु[८] राजपुत्रेषु दर्शनीयौ[९] तौ वयसा आकारेण च अल्पौ अपि सर्वेषां कुतूहल-विषयौ जातौ। क्रमशः सर्वैः राजपुत्रैः धनुषः आरोपणे वृथा प्रयतितं,[१०] पूरणं तु दूरे एव। लङ्कापतिः रावणः अपि हृदये आहतः[११] अस्मिन् प्रयत्ने। अन्ते च विश्वमित्र-निर्देशात् रामः पुरस्सरः[१२] भूत्वा यावत् धनुः लीलया उत्थाप्य[१३] आरोपयति, तावत् तत् जीर्णम् इव मध्ये भग्नम्। सर्वे च सचकिताः स्थिताः। प्रहृष्टा सीता तु रामस्य कण्ठे वरमालाम् आर्पयत्[१४]। स-पुत्र-दारः दशरथः सत्कारेण निमन्त्रितः जनकेन। अन्येषां त्रयाणाम् अपि भ्रातॄणाम् अन्याभिः राजकन्याभिः विवाहं निश्चित्य सर्वम् एव कौतुकमङ्गलं[१५] तेन सोत्साहं निर्वर्तितम्[१६]।

पठनार्थं श्लोकः—

जनकानां रघूणां च सम्बन्धः कस्य न प्रियः।
यत्र दाता ग्रहीता च स्वयं कुशिक-नन्दनः॥
(भवभूतेः)

प्रश्नाः—

१. सीता-स्वयंवरे कीदृशः पणः? २. अन्यैः राजपुत्रैः कथं प्रयतितम्?
३. रामस्य प्रयत्नं वर्णय। ४. अन्येषां त्रयाणां भ्रातॄणां काः भार्याः?

शब्दार्थाः—

१. मिळवूं इच्छिणारा=मिलानेको इच्छुक। २. जाहिर केला=जाहिर किया।
३. जवळ=पास। ४. (धनुष्याला) दोरी बांधणें=(धनुष्यको) डोरी चढाना।
५. बाण लावून ओढणें=तीर लगाकर खींचना। ६. वरील=वरेगी।
७. घेऊन=लेकर। ८. एकत्रित (झालेला)=जमे हुए।
९. सुंदर=भव्य, अच्छा दिखनेवाला। १०. प्रयत्न केला=प्रयत्न किया।
११. जखमी झाला=जखमी हुआ। १२. पुढे सरून=आगे बढकर।
१३. उचलून=उठाकार। १४. अर्पण केली=अर्पण की।
१५. विवाह समारंभ=समारोह। १६. साजरा केला=सम्पन्न किया।

## ५. परशुराम-गर्व-हरणम्

ऋषेः जमदग्नेः अपत्यम् अपि, रामः इति ख्यातः आसीत्। पित्राज्ञा-परिपालकेन तेन स्वमातुः अपि शिरः परशुना उत्कृत्य[१] प्रथमं घृणा[२] जिता। ततः स्वपितुः अभिभावकानां[३] क्षत्रियाणाम् एकविंशतिवारम् उच्छेदं[४] कृत्वा सम्पूर्णा अपि मही[५] जिता। भार्गव-क्षेत्रे च कृतवसतिः[६] शान्तः तदानीं तिष्ठति स्म।

शिवधनुषः भङ्गस्य शब्दम्[७] इव[७] वार्ता श्रुत्वा सः क्रुद्धः। कः अयं नूतनः क्षत्रियावतारः इति शङ्कितः इव अयोध्यां गच्छन्तीं रामस्य वरयात्राम् अरुणत्[८]। वृद्धः पुत्रवत्सलः च दशरथः तम् अर्घ्येण[९] प्रसादयितुं[१०] प्रायतत। लक्ष्मणः च अमर्षणः[११] ब्राह्मणं अपि तं बाणलक्ष्यं[१२] कर्तुम्[१२] ऐच्छत्।[१२] रामः तु स्थिरचित्तः तस्य क्रोधकारणं पृष्टवान्। गर्वशीलेन परशुरामेण उक्तम्- "जीर्णस्य शिवधनुषः भङ्गे किं ते शौर्यम्? इदं मे वैष्णवं धनुः, तत् पूरयितुं क्षमः चेत्, प्रशंसनीयः" इति। तूष्णीम्[१३] एव रामेण भार्गव-हस्तात् धनुः गृहीतं, तत् आरोप्य स्व-बाणेन पूरितं च। "ब्राह्मणः इति अवध्यः[१४] असि, अतः अनेन अमोघेन[१५] बाणेन इहलोके गतिं ते निवारयामि, स्वर्लोकं वा" इति रामेण उक्तः परशुरामः हृतगर्वः[१६] तं प्रशंसन् स्व-क्षेत्रं निवृत्तः।

पठनार्थं श्लोकः—

एवमुक्तवति भीमदर्शने भार्गवे स्मितविकम्पिताधरः।
तद्धनुर्ग्रहणमेव केवलं प्रत्यपद्यत समर्थमुत्तरम्॥

[कालिदासस्य]

प्रश्नाः—

१. कः खलु परशुरामः?
२. कीदृशः च तस्य प्रभावः?
३. किमर्थं सः रामस्य वरयात्राम् अरुणत्।
४. रामेण तस्य गर्वः कथं हृतः?

शब्दार्थाः—

१. कापून=काटकर
२. किळस=घिन
३. अपमान करणारे=अपमान करनेवाले
४. नाश
५. पृथ्वी
६. वस्ती करून=रहकर
७. जणुं आवाजच=मानो आवाजही
८. अडविली=रोकदी
९. पूजासामग्री
१०. प्रसन्न करून घेण्यास=प्रसन्न कराने के लिए
११. रागीट=क्रोधी
१२. बाणाचा नेम धरूं इच्छिला=बाणका निशाना करना चाहा
१३. मुकाट्याने=चुपचाप
१४. वधाला अयोग्य=वध के अयोग्य
१५. अचूक
१६. गर्व हरण केलेला=गर्व हरण किया हुआ।

# ६. पितृ-वचन-क्रिया

निर्वृत्ते[१] पुत्राणां विवाहे वृद्धः दशरथः ज्येष्ठं पुत्रं रामं युवराज-पदे अभिषेक्तुम् ऐच्छत् । सर्वेषां जनानां प्रियः हि रामः आसीत् । न कस्य अपि तत्र विमतिः[२] । मुहूर्तः निश्चितः, अभिषेक-सामग्री च संनद्धा[३] । कैकेय्या पुनः "यौवराज्ये भरतः एव अभिषिच्यताम्[४]" इति स्वाग्रहः प्रकटितः । राज्ञा अनुनीता[५] अपि सा राजानं पुरातनं वरदानं स्मारितवती[६] । सत्य-प्रतिज्ञस्य दशरथस्य गत्यन्तरं[७] न आसीत् ।

श्रुत-वृत्तान्तः रामः तु कैकेयीं गत्वा अवदत्— "अम्ब, न मे का अपि हानिः भरताभिषेके" इति । तया तु कथितम्-"कथं विश्वसिमि[८] अत्र । सर्वे जनाः हि तव अनुकूलाः । त्वं यदि स्वयं चतुर्दश-वर्षाणि सुदूरे वने वससि तर्हि सुष्ठु[९] स्यात्" इति । रामेण तत् सपदि[१०] एव अङ्गीकृतम् । तेन राज्ञः अतीव दुःखं सञ्जातम् ।

सर्वेषां विरोधे अपि रामः वनं प्रस्थितः । सीता अपि तस्य छाया इव तम् अनुगता । बन्धु-प्रेमिणा लक्ष्मणेन अपि राम-मार्गः स्वयं स्वीकृतः । वल्कलानि वसित्वा,[११] जटाः बद्ध्वा गङ्गाम् उत्तीर्य[१२] वन-वासिनः सञ्जाताः ते सर्वे ।

पठनार्थं श्लोकः—

न ह्यतो धर्मचरणं किञ्चिदस्ति महत्तरम् ।
यथा पितरि शुश्रूषा तस्य वा वचनक्रिया ॥

(वाल्मीकेः)

प्रश्नाः—

१. कः यौवराज्ये इष्टः सर्वेषाम् ?
२. कैकेय्याः पुनः कीदृशः आग्रहः ?
३. रामस्य तत्र किम् उत्तरम् ?
४. सीता-लक्ष्मणाभ्यां किं स्वीकृतम् ?

शब्दार्थाः—

१. समाप्त
२. भिन्न मत
३. जुळविली=जुटाई
४. अभिषेक केला जावो=अभिषिक्त किया जाय.
५. समजूत घातली=मनाई गई.
६. आठवण दिली=स्मरण दिलाया.
७. दुसरा उपाय=दूसरा उपाय
८. विश्वास ठेवूं=विश्वास करूँ
९. चांगलें=अच्छा
१०. लगेच=शीघ्र ही
११. नेसून=पहिनकर
१२. पार करून=पार उतरकर

# ७. महात्मा भरतः

रामे वनं गते शोकात् दशरथः मृतः। तदा भरतः स-शत्रुघ्नः मातुल–निकटे आसीत्। वसिष्ठेन तौ आनायितौ[१]। अयोध्याम् आगत्य एव ज्ञात-वृत्तान्तः[२] भरतः कैकेय्यै अतीव क्रुद्धः। "पति-घातिनी" इति तां निर्भर्त्सयन् "न अहं राज्यम् अधिरोक्ष्यामि[३]" इति स्पष्टं न्यवेदयत्[४]। रामं स-सीतं स-लक्ष्मणं च प्रत्यानेष्यामि[५] इति उक्त्वा सत्वरम् एव निर्गतः।

चित्रकूट-समीपे सः रामेण मिलितः। सप्रेम समालिंङ्ग्य तेन रामः बहु बहु विज्ञापितः अयोध्यां प्रतिगन्तुं, राज्यं च स्वीकर्तुम्। परं रामः अविचलः[६] एव आसीत्–पितुः प्रतिज्ञा पुत्रेण अवश्यं पूरणीया इति हेतोः। दशरथस्य मरणं निवेद्य तस्य अन्त्य–क्रियां कर्तुं रामं प्रार्थितवान् भरतः। 'न अहं कदा अपि राज्यम् अधिरोक्ष्यामि' इति उक्त्वा च राम-पादुके[७] याचते स्म। ते प्राप्य प्रतिनिवृत्तः, सिंहासने च ते प्रतिष्ठाप्य[८], 'नन्दिग्राम-गतः वसिष्ठाज्ञया राज्यं शास्ति स्म। किंबहुना असिधारा-व्रतम्[९] अभ्यस्यति[९] इव[९]।

पितुः प्रतिज्ञा-पूरणाय रामेण न केवलं राज्यं त्यक्तम्, अपि तु दीर्घः अरण्य-वासः स्वीकृतः। सीता-लक्ष्मणाभ्यां स्वेच्छया एव तदनुगमनं कृतम्। अनायास-लब्धम्[१०] अपि राज्यं निःस्पृहेण भरतेन न अङ्गीकृतम्। विरलाः एव एतादृशाः [११] महात्मानः।

पठनार्थं श्लोक :—

दृढभक्तिरिति ज्येष्ठे राज्यतृष्णा-पराङ्मुखः।
मातुः पापस्य भरतः प्रायश्चित्तमिवाकरोत्॥
(कालिदासस्य)

प्रश्नाः—

१. कः परिणामः राम-गमनस्य ? २. कीदृशः भरतस्य प्रयत्नः ?
३. कस्मात् अविचलः रामः ? ४. भरतस्य माहात्म्यं कथय।

शब्दार्थाः—

१. आणविले=**लिवा लाया**। २. वृतान्त कळल्यावर=**जाननेपर**।
३. बसेन=**बैठूंगा**। ४. सांगितलें=**निवेदन किया**।
५. परत आणीन=**वापस लाऊंगा**। ६. **स्थिर**
७. खडावा=**खडाऊँ**। ८. स्थापन करून=**स्थापन कर**।
९. जणू तरवारीच्या धारेवर चालण्याची संवय करतो=**मानो तलवारकी धारपर चलनेका अभ्यास करता है**। १०. **सहज प्राप्त**।
११. असे=**ऐसे**।

# ८. अरण्य-सञ्चारः

अयोध्यां त्यक्त्वा वने सञ्चरमाणः[१] रामः विन्ध्याटवी-मुखे[२] विराध-दनुकबन्धादीन् राक्षसान् हत्वा[३] दण्डकारण्यं प्राप्तः। अगस्त्य-प्रमुखैः ऋषिभिः स्थापितान् आश्रमान् पश्यन् संरक्षन् च, ऋषीणां वने-चराणां[४] अपि भक्ति-पात्रम् अभवत्। मुग्धया[५] शबर्या[५] भक्त्या अर्पितानि उच्छिष्टानि[६] अपि बदरी-फलानि[७] तस्य ग्राह्याणि[८] आसन्। सर्वत्र लक्ष्मणः एकनिष्ठः सेवकः आसीत् तस्य, सीतायाः च। पञ्चवट्यां स्वाश्रमं निर्माय[९] कञ्चित् कालं ते उषिताः[१०]।

एकदा लङ्कापतेः भगिनी शूर्पणखा नाम राक्षसी सीतां भक्षयितु-कामा रामम् आगत्य कपटेन कामयते[११] स्म। "अहं सपत्नीकः,[१२] लक्ष्मणम् गच्छ" इति उक्ता सा तं प्रति गता। तेन च कर्ण-नासिका-च्छेदेन[१३] विशेषेण[१४] विरूपा[१४] कृता। क्रुद्धा च परिभूता[१५] च प्रतिकारार्थ[१६] खर-दूषण-त्रिशिरसः प्रार्थितवती। ते सर्वे राक्षसानां चतुर्दश-सहस्रैः सह रामेण व्यापादिताः[१७]। तेन सन्तप्ता सा ज्येष्ठं भ्रातरं रावणं प्रति गता। सीता-स्वयंवरे सञ्जातम् आत्मनः परिभवं न खलु सः विस्मृतवान्। मारीचेन नाम राक्षसेन संमन्त्र्य[१८] सीता-हरणोपायं सः चिन्तितवान्।

पठनार्थं श्लोक :—

चतुर्दश-सहस्राणि रक्षसां भीमकर्मणाम्।
त्रयश्च दूषण-खर-त्रिमूर्धानो रणे हताः॥
(भवभूतेः)

प्रश्ना :—

१. दण्डकारण्ये रामः कथं सर्वेषां प्रीतिपात्रम्?
२. कुत्र उषितः रामः?
३. शूर्पणखायाः कः वृत्तान्तः?
४. कीदृशं तस्य पर्यवसानम्?

शब्दार्थाः—

१. संचार करीत=संचार करता हुआ। २. आटवी=जंगल।
३. मारून=मारकर। ४. जंगली लोक ५. भोळी=भोली। ६. उष्टी=झूठी।
७. बोरें=बेर। ८. घेण्या योग्य=लेने योग्य। ९. निर्माण करून=निर्माण कर।
१०. राहिले=रहे। ११. अभिलाषा करूं लागली=अभिलाषा करने लगी।
१२. स्त्री सहित १३. कान-नाक कापून=कान-नाक काटकर।
१४. अधिक कुरूप १५. अपमानित १६. सूडासाठी=बदला लेनेको।
१७. मारले=मारे। १८. कट करून=सलाह लेकर।

# ९. सीतापहरणम्

मारीचः माया-रूपं[१] कर्तुं समर्थः आसीत्। "त्वं काञ्चन-मृगः भूत्वा स्व-मृगयार्थं रामं सुदूरं विलोभय,[२] कपटेन च राम-वाण्या लक्ष्मणं साहाय्यार्थम् आह्वय[३]। यावत् एकाकिनीं सीताम् अहं त्वरितं हरामि।" इति रावणस्य मन्त्रणा[४]। मारीचेन तथा एव कृतम्।

माया-मृगं हन्तुं सुदूरं गते रामे सहसा "हा सीते हा लक्ष्मण, रक्षणार्थं धाव" इति राम-सदृशी वाणी समुत्पन्ना। तां श्रुत्वा भीता सीता लक्ष्मणं गन्तुं प्रैरयत्[५]। रामः स्वसंरक्षण-क्षमः इति विश्वस्तः[६], अपि च एकाकिनीं सीतां त्यक्त्वा कथं वा गन्तव्यम् इति शङ्कितः सः परुषैः[७] वाक्यैः सीतया प्रेषितः[८] एव। अत्रान्तरे[९] [१०]भिक्षु-वेषेण रावणः उटज[११]-द्वारं प्राप्तः। भिक्षां दातुं निर्गतां सीतां बलात् आकृष्य आकाश-मार्गेण च प्रस्थितः।

आक्रोशन्तीं तां श्रुत्वा जटायुषा नाम गृध्रेण तीव्रः विरोधः कृतः। रावणेन तस्य पक्षौ छित्वा[१२] सः घातितः[१३]। आश्रमं निवृत्ताभ्यां रामलक्ष्मणाभ्यां सीता-हरणं रावणेन कृतम् इति कथयन् एव सः प्राणान् अत्यजत्। ततः सशोकौ तौ सीतान्वेषणार्थम्[१४] आश्रमं परित्यज्य निष्क्रान्तौ[१५]।

पठनार्थं श्लोकः—

तां तु लक्ष्मण रामेति क्रोशन्तीं मधुरस्वराम्।
जहारात्मविनाशाय दशग्रीवो मनस्विनीम्॥
(वाल्मीकेः)

प्रश्नाः —

१. रावणस्य कीदृशी मन्त्रणा?
२. लक्ष्मणः कथं विश्वस्तः, कस्मात् च शङ्कितः?
३. केन कथं च अपहृता सीता?
४. जटायुषा स्वमरणेन कः उपकारः कृतः?

शब्दार्थाः —

१. कपटवेष। २. भुलव=लुभाओ। ३. हाक मार=बुलाओ। ४. कट=योजना। ५. प्रवृत्त केलें=प्रेरणा की। ६. खात्री असलेला=विश्वास करनेवाला। ७. कठोर ८. पाठविला=भेजा। ९. इतक्यांत=इतनेही में। १०. भिकारी=भिखारी। ११. झोपड़ी १२. तोडून=काटकर। १३. मारला गेला=मारा गया। १४. अन्वेषण=शोध=खोज। १५. बाहेर पडले=बाहर निकले।

# १०. समान-व्यसनः सुग्रीवः

सीतां मार्गयमाणः[१] रामः कदाचित् पंपा-सरः-समीपे किष्किन्धां प्राप्तः। सा हि वानराणां राज्ञः सुग्रीवस्य राजधानी। सुग्रीवस्य भ्राता वाली नाम आसीत्। सः भ्रातुः पत्नीम् अपाहरत्। तं च राज्यात् अभ्रंशयत्।

रावणेन आकाश-मार्गेण अपह्रियमाणा[२] सीता स्व-वस्त्र चीरिकाः[३] आभरण-विशेषान् च भूमौ अभिज्ञानार्थं[४] न्यक्षिपत्[५]। ते सुग्रीवेण प्राप्ताः राम-लक्ष्मणाभ्यां दर्शिताः च। नित्यं पादाभि-वन्दन-शीलेन[६] लक्ष्मणेन तेषु सीतायाः नूपुरौ[७] एव अभिज्ञातौ। रावणकृतं सीतापहारं च तस्मै अकथयत् रामः।

समान-व्यसनिनोः[८] राम-सुग्रीवयोः सख्यं समजायत। ताभ्यां परस्पर-साहाय्य-दाने समयः[९] कृतः। सीता-शुद्धौ स्वसचिवान् न्ययोजयत् सुग्रीवः। वानराणां च अगणितं सैन्यं संग्रहीतुं[१०] प्रयत्नम् आतिष्ठत्[११]। नल-नीलाङ्गद-जाम्बवत्-प्रभृतयः विविधकर्म-कुशलाः सेनापतयः सैनिकाः च राम-साहाय्ये दत्तादराः अभवन्।

रामेण अपि वालिनः वधं कृत्वा सुग्रीवस्य पत्नी राज्यं च तस्मै समर्पितम्। सुग्रीवं राज्ये अभिषिच्य वर्षर्तुं कथम् अपि अत्य-वाहयत्[१२] रामः। तदनन्तरं वानर-प्रमुखाः दिशिदिशि प्रहिताः[१३]।

पठनार्थं श्लोकः—

तव प्रसादेन नृसिंह वीर प्रियां च राज्यं च समाप्नुयामहम्।
तथा कुरु त्वं नरदेव वैरिणं, यथा निहंस्यद्य रिपुं ममाग्रजम्॥

(वाल्मीकिः)

प्रश्नाः—

१. राम-सुग्रीवयोः कस्मात् सख्यम्?
२. लक्ष्मणेन केवलं नूपुरौ एव किमिति अभिज्ञातौ?
३. सुग्रीवेण कीदृशः उद्योगः आरब्धः?
४. रामेण सुग्रीवस्य कथम् उपकृतम्?

शब्दार्थाः—

१. शोधीत=खोजता हुआ २. पळविली जाणारी=भगाओ जा रही
३. पट्टी, तुकडा=टुकड़ा ४. ओळखीसाठी=पहिचानके लिओ ५. फेकले=फेंके
६. नमस्कार करणारा=पैर छूनेवाला ७. पैंजण=पैंजनी ८. समानदुःखी
९. करार १०. गोळा करण्यास=जुटानेको ११. केला=किया
१२. काढला=काटा १३. पाठविले=भेजे

# ११ रामदूतः महाबली हनूमान् ।

सुग्रीव-सचिवेषु[१] प्रधानः बुद्धिमतां[२] वरिष्ठः[२], अञ्जना-पुत्रः हनूमान् आसीत् । सः वज्राङ्ग[३]-बली[३] वेगे वायुम् अतिशेते[४] स्म । जानकी-मार्गणे[५] सः एव सफलः स्यात् इति विश्वस्य,[६] रामेण अभिज्ञानार्थं मुद्रिकां दत्वा, सीता-समाश्वासाय[७] सन्देशः अपि तन्मुखेन प्रेषितः ।

वृत्तं सर्वं समाकलय्य हनूमान् लङ्का-द्वीपं गन्तु प्रस्थितः । तत्र प्रथमः विघ्नः समुद्रतरणम् । गिरि-शिखरात् उड्डीय वायुसुतः सः सागरम् उल्लङ्घ्य[८] लङ्कां प्राप्तः । रावणस्य अशोक-वनिकां च प्रविश्य तरुतले राक्षसीभिः परिवृतां[९] विरह-मलिनां सीताम् अपश्यत् । तत्र निभृत[१०] गत्वा "राम राम" इति जपन् स्थितः । देश-विरोधिना राम-नाम-श्रवणेन चकिता सीता निपुणं[११] निरूपयति स्म । तदा मुद्रिकां सन्देशं च दत्वा, तया अर्पितं मणिं गृहीत्वा च कृत-कृत्यः[१२] सन् हनूमान् निवृत्तः ।

गमनात् प्राक वानर-चेष्टितेन अशोक-वनिकां ध्वंसयन्[१३] राक्षसः गृहीतः । वस्त्र-वेष्टित-लाङ्गूलः[१४] प्रदीप्तः[१५] च मुक्तः सन् गृहात् गृहम् उत्पत्य[१६] सर्वां लङ्काम् अदहत् । सागरे पुच्छ-पावकं[१७] प्रशाम्य[१७] च किष्किन्धाम् आगतः ।

पठनार्थं श्लोकः—

उल्लङ्घ्य सिन्धोः सलिलं सलीलं यः शोक-वह्निं जनकात्मजायाः ।
आदाय, तेनैव ददाह लङ्कां नमामि तं प्राञ्जलिराञ्जनेयम् ॥

(तुलसीदासस्य)

प्रश्नाः—

१. हनूमतः गुणान् वर्णय । २. कथं तेन सागरः लङ्घितः ?
३. सीता-शुद्धिः कथं कृता ? ४. लङ्का-दहनं सविस्तरं कथय ।

शब्दार्थाः—

१. मन्त्री २. श्रेष्ठ बुद्धिमान् ३. दणकट व शक्तिमान=कड़ा तथा सबल ४. मागे टाकी=(से) बढकर था ५. शोध करण्यांत=खोजमें ६. खात्री ठेवून=विश्वास रख ७. समाधान ८. ओलांडून=लांघकर ९. वेष्टित १०. हळूच=धीरेसे ११. सूक्ष्मपणें=सूक्ष्मतासे १२. कृतार्थ १३. नाश करीत=नाशकरता हुआ १४. शेपटीला कपड़े गुंडाळून=कपडेसे पूंछ लपेटकर १५. पेटलेला=आग लगा हुआ १६. उड्या मारून=कूदकर १७. शेपटीची आग विझवून=पूछकी आग बुझाकर

# १२. रावण–वधः

हनूमता सीता-प्रवृत्ति[१]: उपलब्धा। अतः हर्षः सञ्जातः सैनिकानां सर्वेषाम्। रचित-व्यूहाः[२] सेनापतयः प्राचलन् लङ्कां प्रति। समुद्र-तीरं च प्राप्य, मार्गम् अलब्ध्वा संक्रुद्धे रामे समुद्रस्य विनय-वशात्[३] नलस्य सेतु-बन्धनं शक्यं जातम्। तेन सर्वम् एव वानर-सैन्यं लंकां पर्यवेष्टयत्। रावणेन तिरस्कृतः तस्य भ्राता बिभीषणः स्वयं रामम् आश्रितः। राक्षसैः सह तुमुले[४] युद्धे लक्ष्मणस्य वानर-वीराणां च आश्चर्य-कर्माणि दृष्टि-गोचरी-भूतानि[५]। कुम्भकर्णस्य, इन्द्रजितः, कुम्भ-निकुम्भयोः च मरणात् संक्रुद्धः रावणः स्वय समर-भूमिम् अवतीर्णः। रामेण सः लीलया हतः।

बिभीषणं लंका-राज्ये प्रतिष्ठाप्य[६] सीता-ग्रहणे शंकितः रामः तस्याःपरीक्षार्थम् अग्निप्रवेशम् आदिशत्। सीता-शील-विषये अग्न्यादि-देवानां प्रामाण्यात् रामः तां स्वीकरोति स्म। रावणात् प्राप्तेन पुष्पकेण विमानेन सर्वे अयोध्याम् अगच्छन्। भरतेन सादरं प्रत्यर्पिते[७] राज्ये रामभद्रः समहोत्सवम् अभिषिक्तः च।

पठनाथ श्लोकः—

वितरसि दिक्षु शरैर्दिक्पति-कमनीयम्।
दशमुख-मौलि-बलिं रमणीयम्।
केशव धृत-राम-शरीर, जय जगदीश हरे॥
(जयदेवस्य)

प्रश्नाः—

१. समुद्रे सेतुः केन कथं बद्धः ?
२. बिभीषणः रामं कस्मात् आश्रितवान् ?
३. रावणवधं वर्णय।
४. सीता-चारित्र्यं कथय।

शब्दार्थाः—

१. बातमी=खबर
२. सेनेची मांडणी केलेले=सेनाकी रचना किये हुए.
३. वठणीवर आल्यामुळें =अनुशासित होनेके कारण
४. घोर=घमासान.
५. दिसले=दिखे.
६. स्थापित करून=स्थापित कर
७. परत केलेले=वापस किये गये

# १३. उत्तर-काण्डम्

सीता-स्वीकार-विषये पौर–जानपदेषु लोकापवादम्[१] उपश्रुत्य प्रजानुरञ्जने[२] दक्षः, कर्तव्य-कठोरः रामः कठोर-गर्भाम्[३] अपि जानकीं सहसा अत्यजत् । तदा गुरुजनः समीपे न आसीत् । गृहात् निरस्ता[४] अपि सीता तस्य हृदयात् न कदापि अपयाति स्म । ततः प्रक्रान्ते[५] अश्वमेधे सीतायाः सुवर्ण-प्रतिमा एव तस्य सहधर्मचारिणी ।

परित्यक्ता हि सीता प्रसव-वेदनां प्राप्य आत्मानं गङ्गायां क्षिप्तवती । तत्र च दारक-द्वयं प्रसूता । वाल्मीकिना सपुत्रा स्वाश्रमम् आनीता च । स्तन्य-त्यागात्[६] परं तौ यमलौ तेन एव परिवर्धितौ, संस्कारितौ, क्षत्रियोचितं शिक्षितौ च । ताभ्याम् एव वाल्मीकि-कृतं राम-चरितम् अस्मिन् अश्वमेधे प्रगीतम् ।

वाल्मीकि-निर्देशात् एतयोः स्वपुत्रयोः परिज्ञानं रामस्य अभवत् । तेन एव सीता राम-स्वीकारार्थं तत्र आनीता । परं स्वचारित्र्यं प्रमाणयितुं[७] कृतायां पृथ्वी-प्रार्थनायां सीता रसा-तल-प्रवेश याचितवती । तत्र विलीनायां तस्यां सशोकः रामः पुत्राभ्यां राज्यं दत्वा महाप्रस्थानम्[८] अकरोत् ।

पठनार्थं श्लोक :—

यथाहं राघवादन्यं मनसापि न चिन्तये ।
तथा मे माधवी देवी विवरं दातुमर्हति ॥

(वाल्मीकेः)

प्रश्ना :—

१. रामेण कठोर-गर्भा अपि सीता कस्मात् त्यक्ता ?
२. परित्यक्तायाः तस्याः का गतिः ?
३. वाल्मीकेः औदार्यं वर्णय ।
४. सीतायाः कीदृशं पर्यवसानम् ?

शब्दार्था :—

१. जन–निन्दा । २. प्रसन्नता ३. बाळंतपणास टेकलेली=जचकी होनेमें । ४. काढून टाकलेली=बाहर निकाली गई । ५. आरब्ध ६. दूध सुटल्यानंतर=दूध छूटनेपर । ७. सिद्ध करण्यासाठीं=सिद्ध करनेके लिए । ८. स्वर्ग–गमन

संस्कृत–भाषा–प्रचारि–सभायाः

# मौखिक–संस्कृत–परीक्षाः

संस्कृत-भाषाप्रचारि-सभायाः निम्न-लिखित-मौखिक-परीक्षाः प्रतिवर्षं भविष्यन्ति। एताः सर्वाः परीक्षाः मौखिक्यः एव वर्तन्ते। परीक्षाः प्रतिवर्षं द्विवारं ख्रिस्ताब्दस्य प्रथमे मासि अष्टमे मासिच एवं (हेमन्ततौं वर्षतौं च) भविष्यन्ति। द्वयोः परीक्षयोः मध्ये भवेत् षण्मासानाम् अन्तरम्। नागपुरस्थाः नागपुरात् बहिःस्थाः च परीक्षार्थिनः बाल-बालिकाः परीक्षार्हाः भवेयुः। परीक्षा-शुल्कं प्रतिछात्रं चतुराणकं केवलम्। यदि दशसंख्याधिकाः परीक्षार्थिनः आवेदन-पत्रं सर्वकारमान्य-विद्यालयस्य मुख्याध्यापकद्वारा प्रेषयिष्यन्ति तर्हि परीक्षा-केन्द्रस्य आयोजनं मुख्याध्यापक–महाभागस्य सहकार्येण कर्तुं शक्यते। आवेदन–पत्राणि परीक्षाशुल्केन सह परीक्षा–मासस्य मासपूर्वं प्रेषणीयानि। आवेदन-पत्रे परीक्षार्थिनः नाम, पितुः नाम, कुल-नाम, वयः, पाठशाला, निवास-स्थानं, केन्द्र-नाम च लिखन्तु। परीक्षोत्तीर्णच्छात्रेभ्यः प्रमाण-पत्राणि प्रदीयन्ते यथासमयम्। श्रेणिगुणानां प्रतिशतता अधोलिखिता भवेत्—

| | |
|---|---|
| प्रथम–श्रेणिः | ८०–१०० |
| द्वितीय–श्रेणिः | ६०–७९ |
| तृतीय–श्रेणिः | ४०–५९ |
| प्रावीण्यम् | ९०–१०० |

एतासां परीक्षाणां नामानि अभ्यासक्रमः पुस्तक-नामानि च अधः लिख्यन्ते। अभ्यास-क्रमान्तर्गतानां द्वादश-पाठ्य-पुस्तकानां मूल्यम् आणक-द्वयं प्रत्येकम्।

**प्रथम–परीक्षा–**

१. बालामृत-शतश्लोकी प्रथम-भागः*
२. सुलभ-शब्द-रूपावलिः*
३. व्यवहार प्रश्नोत्तरी*

**द्वितीय–परीक्षा–**

४. उपयुक्त-धातुरूपावलिः*
५. हितोपदेश-कथाः*
६. संक्षिप्तामरकोशः*

प्रथम-परीक्षायाः अभ्यासक्रमः च।

**तृतीय–परीक्षा–**

७. छात्रामृत-शतश्लोकी (द्वितीय-भागः)*
८. रामायण-कथाः*
९. व्यवहार-प्रश्नोत्तरी (द्वितीय-भागः)

द्वितीय-परीक्षायाः अभ्यासक्रमः च।

**संस्कृत–प्रवेश–परीक्षा–**

१०. महाभारत-कथाः
११. नाटच-प्रवेशः
१२. कौमुदी-प्रवेशः

तृतीय-परीक्षायाः अभ्यासक्रमः च।

*मुद्रिताः
**धर्मपीठम्,**
**नागपुरम् १**

**स. ना. कुलकर्णी**
**सं.भा.प्र.सभायाः**
प्रमुख-कार्यवाहः




इयं पुस्तिका वर्धानगरस्थ-राष्ट्रभाषा-प्रचार-समितेः मुद्रणालये मुद्रिता नागपुरस्थ-संस्कृतभाषाप्रचारि-सभाद्वारा प्रमुख-कार्यवाहेन धर्मपीठे कुलकर्णी-भवने प्रकाशतां च नीता।

संस्कृत-भाषा-प्रचार-वाङ्मयमाला

# व्यवहार-सूक्तावलिः

[ छात्राणां कृते ]



श्रीमताम् अग्रवाल-कुलावतंसानां
नरसिंगदास-मोर-महाभागानां
दानानुग्रह-फलम् इदम ।

संकलयिता—स. ना. कुलकर्णी



नवमं पुष्पम् ]  १९५४  [ मूल्यम् आणक-द्वयम्

# हृद्गतम् ।

अनुकरण-मूलः हि भाषायाः अधिगमः । अस्माभिः मातृभाषा अनया अनुकरण-प्रणाल्या एव अधिगता । मातृ-पितृ-भ्रातृ-स्वसृ-जनानां भाषाम् अनुकरोति प्रथमं शिशुः । एतेषां वाक्यानि एव तस्य अनुकरणार्हाणि भवन्ति । यथा यथा तस्य व्यवहार-क्षेत्रं वर्धते तथा तथा अनुकरणार्ह-पुरुष-क्षेत्रम् अपि । सञ्जातायां वाचन-क्षमतायां ग्रन्थानां भाषा अपि अनुकरण-विषयः भवति । एवम् अनुकरणम् एव भाषाधिगमस्य आत्मा । तेन हि अनुकरणीयानाम् आदर्श-भूतानां वाक्यानां वाक्यांशानां च आवश्यकता वर्तते अध्येतॄणां कृते । संस्कृत-भाषा-व्यवहारः सम्प्रति न तथा प्रचलति यथा मातृभाषायाः राष्ट्रभाषायाः आंग्लभाषायाः वा । अतः विद्यते आत्यन्तिकी आवश्यकता अनुकरणार्ह-वाक्यानां पुरःस्थापनस्य संस्कृत-भाषा-विद्यार्थिनाम् । अस्यां पुस्तिकायां दैनंदिन-व्यवहारे उपयोगिनां केषांचित् आदर्श-वाक्यानां संग्रहम् अध्येतॄणां पुरतः प्रस्थापयितुम् उपक्रमः कृतः ।

वाक्यानां सङ्कलनं ख्यातनाम्नां संस्कृत-वाङ्मय-निर्मातॄणां वागीश्वराणां ग्रन्थेभ्यः कृतम् । बाणेन कादम्बरी नाम हृद्या कथा अमृत-मधुरया गिरा लिखिता । किन्तु दीर्घ-समास-प्राचुर्यात् अथ च सन्धि-वैपुल्यात् सरसायाम् अपि भाषायां क्लिष्टत्वेन पदं कृतम् । मानवीय-मनो-व्यापाराणां सूक्ष्मं निरीक्षणं विश्लेषणं च विधाय बाणेन मानवस्य मनःपटः एव अस्माकं पुरतः मानचित्रम् इव प्रस्थापितः, येन अखिल-गूढ-मनोव्यापाराणां स्फुटं दर्शनं नः सुस्पष्टतया भवति । दीर्घ-समास-निरसनात् सन्धि-राहित्यात् च बाण-कृत-कादम्बर्याः सरस सुर-वाण्याः ईषद्दर्शनं बालानाम् इह भवेत् । कवि-कुल-गुरोः कालिदासस्य विक्रमोर्वशीय-नाटकात् केचन प्रसङ्गाः अत्र उद्धृताः । ते शिष्टाचारं दर्शयन्ति । भारवेः किरातार्जुनीयं यत् काव्यं तत् सुभाषित-प्रचुरं विद्यते तथा एव श्रीवेद-व्यासस्य महाभारतं श्रीवाल्मीकेः रामायणं च । एतेभ्यः कृतः सुभाषित-संग्रहः पथिकानां पाथेय-पुटिकावत् बालानां जीवन-पथे उपकारकः भवेत् । एवम् अस्य वाक्य-संग्रहस्य कण्ठस्थीकरणेन संस्कृत-भाषा-व्यवहारोपयोगिनी सिद्ध-सामग्री बालानां करस्था भवेत् । तत्तत्कवेः अल्पः परिचयः सञ्जायेत । प्रायः मूल-ग्रन्थं पठितुं जिज्ञासा समुद्भवेत् । एवं संस्कृत-वाङ्मयस्य अध्ययने अभिरुचिः समुत्पद्येत ।

एतानि वाक्यानि आदर्श-सूत्राणि इव उपयोगीनि भवेयुः । स्वस्व-परिस्थित्यनुसारं देश-काल-पुरुष-विपर्ययं कृत्वा तेषाम् उपयोगः वर्तमान-परिस्थित्यां कर्तुं शक्यः । एतेषां वाक्यानाम् अध्ययनात् बहुविधः लाभः भवेत् । साधु-व्यवहार-ज्ञानं, सभ्य-भाषोपलब्धिः, महाजन-समुदाचारः, कर्तव्याकर्तव्य-विचारः, स्वाचार-नियन्त्रणम्, ध्येय-निश्चितिः, स्वभाव-निरीक्षणं, सदाचार-तत्व-बोधः, इत्यादीनाम् आकलनम् अवश्यं निष्पद्येत । व्यवहार-गहनवने सूचिभेद्ये तमसि पथ-भ्रष्टस्य दीपः इव, व्यवहार-सागरे समीराहत-पुरुषस्य अगतिकतया इतस्ततः परिभ्रमतः पोतः इव वा सुभाषितानां संग्रहः तु मार्गदर्शनाय प्रभवेत् ।

अस्यां पुस्तिकायां संस्कृत-वाक्यानां हिन्दी-भाषायाम् अनुवादः दीयते । अनुवादः तु नागपुरस्थैः स्वाचार-रतैः श्रीमद्भिः फुलकुमार-पोद्दार-महाभागैः कृपया कृतः । प्रत्येकस्य वाक्यस्य सम्बन्धः पुरोवर्तिना वाक्येन सह विद्यते एव इति तु न । यत्र सम्बन्धः त्रुटितः भवति तत्र सम्बन्धस्य त्रोटनं दर्शयितुं रेखा तत्तत्क्रमाङ्कस्य अधस्तात् मुद्रिता ।

एषा पुस्तिका संस्कृत-भाषा-रसिकानां बालानां बालिकानां च संस्कृतानुरागं वाक्पाटवं च संवर्धयितुं सहायीभवेत् इति दृढम् आशासे ।

धर्मपीठम्, नागपुरम्
श्रावण-पूर्णिमा, शके १८७६
दिनाङ्कः १४–८–५४

स. ना. कुलकर्णी
प्रमुख-कार्यवाहः
संस्कृत-भाषा-प्रचारिणी सभा

# व्यवहार-सूक्तावलिः

**बाणस्य कादम्बरी**

## अधो लिखितानि वाक्यानि कादम्बरीतः उध्दृतानि ।

( म.=महाश्वेता, च.=चन्द्रापीडः, पु.=पुण्डरीकः, क.=कपिञ्जलः, का.=कादम्बरी, त.=तरलिका )

१. स्वागतम् अतिथये । म.
२. कथम् इमां भूमिम् अनुप्राप्तो महाभाग ।
३. आगम्यताम् ।
४. अनुभूयताम् अतिथि-सत्कारः ।
५. भगवति प्रसीद । च.
६. विमुच्यताम् अयम् अत्यादरः ।
७. आस्यताम् । म.
८. उपजनयति हि प्रभु-प्रसाद-अपि लवः प्रागल्भ्यम् अधीर-प्रकृतेः । च.
९. तत् यदि न अति खेदकरम् इव ततः कथनेन आत्मानम् अनुग्राह्यम् इच्छामि ।
१०. अति महत् खलु भवद्दर्शनात् प्रभृति मे कौतुकम् अस्मिन् विषये ।
११. कतरत् मरुताम् ऋषीणां गन्धर्वाणां गुह्यकानाम् अप्सरसां वा कुलम् अनुगृहीतं भवत्या जन्मना?
१२. किमर्थं वा अस्मिन् कुसुम-सुकुमारे नवे वयसि व्रत-ग्रहणम् ?
१३. क्व इदं वयः, क्व इयम् आकृतिः, क्व च अयं लावण्यातिशयः, क्व इयम् इन्द्रियाणाम् उपशान्तिः !
१४. न इदम् अस्माभिः अन्यत्र दृष्ट-श्रुतपूर्वं वा ।
१५. अपनयतु नः कौतुकम् ।
१६. आवेदयतु भवती सर्वम् इदम् ।

१. आइये महाराज । २. महाराज आप यहां किस लिये आये हैं । ३. पधारिये । ४. अतिथि-सत्कार स्वीकार करें । ५. हे देवीजी, कृपा करिये । ६. यह बहुत आदर करना छोड़ दीजिये । ७. बैठिये । ८. बड़ोंकी थोड़ीसी कृपा भी अधीर प्रकृतिके मनुष्यको धीठ बना देती है । ९. इसलिये यदि आपको कष्ट न होता हो तो अपना सारा वृत्तान्त कहनेकी कृपा करें । १०. आपका दर्शन हुआ तबसे इस विषयमें मुझे बहुत कुतूहल हो रहा है । ११. मरुत, ऋषि, गन्धर्व, गुह्यक अथवा अप्सरा इनमेंसे कौनसे कुलको भगवतीनें अपने जन्मसे गौरवान्वित किया है? १२. पुष्पके समान कोमल वयमें इतना कठिन व्रत पालन करनेका क्या कारण है । १३. कहाँ यह सुकुमार वय, कहाँ यह आकृति, कहाँ यह सौंदर्यकी सीमा, और कहाँ यह इन्द्रियोंका निग्रह ! १४. हमने ऐसा न तो देखा है न सुना है । १५. हमारा कुतूहल दूर कीजिये । १६. कृपा करके आप यह सब बतलाइये ।

१७. श्रूयताम् । म.

१८. बाले किम् अनेन पृष्टेन प्रयोजनम् ? पु.

१९. भर्तृदारिके,स्नाता देवी। प्रत्यासीदति गृह-गमन-कालः। तत् क्रियतां मज्जन-विधिः ।

२०. सखे पुण्डरीक, न एतत् अनुरूपं भवतः। क्षुद्र-जन-क्षुण्णः एष मार्गः। धैर्य-धनाः हि साधवः । क.

२१. चञ्चले, प्रदेशात् अस्मात् इमाम् अक्षमालाम् अदत्वा पदात् पदम् अपि न गतव्यम् । पु.

२२. का इयं कन्यका, कस्य वा अपत्यम्, किम् अभिधाना, क्व वा गच्छति? क.

२३. हेमकूटाचलम् अभिप्रस्थिता ।

२४. अनुगृह्यताम् अयं जनः ।

२५. अव्यवधानायां भूमौ एव समुपाविशम् । म.

२६. भगवन्, अव्यतिरिक्ता इयम् अस्मच्छरीरात् । अशङ्कम् अभिधीयताम् । म.

२७. राजपुत्रि, किं ब्रवीमि । वाग् एव मे न अभिधेय-विषयम् अवतरति त्रपया । क.

२८. प्राण-परित्यागेन अपि रक्षणीयाः सुहृदसवः ।

२९. न हि किञ्चित् न क्रियते ह्रिया। तत् न युक्तम् एकाकिनं कर्तुम् ।

३०. सखे कपिञ्जल, विदित-वृत्तान्तः अपि किं मां पृच्छसि ? पु.

१७. सुनिये। १८ बाले, यह सब पूछनेका क्या अुपयोग है ? १९. राजपुत्रि, माताजीका स्नान हो गया, लौटनेका समय हो रहा है, अतः आप भी स्नानसे निवृत्त होवें। २०. मित्र पुण्डरीक, यह तुझे शोभा नहीं देता। इस मार्गका अवलम्बन केवल नीच लोग ही किया करते हैं। धैर्य ही सज्जनोंका धन होता है। २१. ऐ लंपट छोकरी, इस रुद्राक्ष मालाको दिये बिना तुझे इस स्थानसे एक पैर भी बढ़ाना न चाहिये। २२. यह छोकरी कौन है ? किसकी है ? इसका नाम क्या है ? और यह कहाँ जा रही है ? २३. हेमकूट पर्वतकी ओर जा रही है। २४. इस व्यक्तिपर अनुग्रह कीजिये। २५. उसके पास में खुली जमीन पर ही बैठ गयी। २६. भगवन्, यह शरीरसे अलग नहीं है, निःशंक कहिये। २७. राजपुत्री, क्या कहूँ ? लज्जाके कारण मेरी वाणी इस विषयमें कुछ बोल ही नहीं सकती। २८. अपने प्राणोंका त्याग करके भी प्रिय मित्रोंके प्राण बचाना चाहिये। २९. लज्जाके कारण मनुष्य न कर डाले ऐसा कुछ भी नहीं है। इसलिये उसको अकेला छोड़ना उचित नहीं है। ३०. मित्र कपिञ्जल, तुझे ज्ञात होकर भी मुझसे क्यों पूछ रहा है।

३१. सखे पुण्डरीक, सुविदितम् एतत् मम । केवलम् इदम् एव पृच्छामि, यत् एतत् आरब्धं भवता किम् इदं गुरुभि: उपदिष्टम्, उत अपर: तपसां प्रकार:, आहोस्वित् अन्य: नियम-प्रकार: ? क.

३२. सखे, किं बहु उक्तेन ? दूरातीत: खलु अुपदेश-काल: । समतिक्रान्त: धैर्यावसर: । पु.

३३. केन वा अन्येन अस्मिन् समये भवन्तं विहाय उपदेष्टव्यम् ?

३४. पच्यन्ते इव मे अङ्गानि, उत्क्वथ्यते इव हृदयम्, प्लुष्यते इव दृष्टि:, ज्वलति इव शरीरम् ।

३५. अत्र यत् प्राप्तकालं तत् करोतु भवान् ।

३६. अतिभूमिम् अयं गत: न शक्यते निवर्तयितुम् । क.

३७. इदानीं निरर्थका: खलु उपदेशा: ।

३८. लता-गृह-शिला-तले शयनम् अस्य अकल्पयम् ।

३९. सर्वथा निष्प्रतिकारा इयम् आपद् उपस्थिता ।

४०. किम् अिदानीं कर्तव्यम् ? केन वा कौशल्येन, कतमया वा युक्त्या, कतरेण वा प्रकारेण, केन वा अवष्टम्भेन, कया वा प्रज्ञया, कतमेन वा समाश्वासनेन अयं जीवेत् ?

४१. किं च अन्यत् क्रियते ? का च अन्या गति: ?

४२. अयि तरलिके, न स्वयम् अणु अपि कर्तव्यम् अलम् अस्मि ज्ञातुम् । म.

४३. उपदिशतु मे भवती यत् अत्र साम्प्रतम् ।

३१. मित्र पुण्डरीक, मुझे यह अच्छी तरह विदित है । मैं केवल यही पूछता हूँ कि आपने जो प्रारंभ किया है, क्या यह गुरुजीके उपदेशानुरूप है, क्या यह कोई तपस्याका नया प्रकार है, अथवा नियमकी साधनाका नया प्रकार है ? ३२. अधिक क्या कहूँ ! अब उपदेशका कोअी उपयोग नहीं है । धैर्यका समय भी चला गया है । ३३. इस समय आपके सिवाय दूसरा कौन उपदेश करने योग्य है ? ३४. मेरे अवयव मानो उबल रहे हैं, हृदय मानो फटा जा रहा है, आँखें मानो दग्ध हो रही हैं, और शरीर मानो जल रहा है ! ३५. इस समय जो कुछ करना योग्य है वह आप करें । ३६. यह मर्यादाके बाहर चला गया है, इसे अब रास्तेपर ला सकना संभव नही दिखाई देता । ३७. इस समय उपदेश करना निरर्थक है । ३८. लतागृहके अंदरकी शिलापर इसकी शय्या तैयार की । ३९. जिसका प्रतिकार करना अशक्य है ऐसी यह आपत्ति आ खड़ी हुई । ४०. अब क्या करना चाहिये ? कौनसे कौशल्यसे, कौनसी युक्तिसे, कौनसी रीतसे, कौनसे आधारसे, कौनसी विचारशक्तिसे, अथवा कौनसा धीर देनेसे यह जीवित रहेगा ? ४१. और दूसरा क्या किया जाय ? और कौनसा दूसरा उपाय है ? ४२. ऐ तरलिके, इस समय में अणुमात्र भी स्वकर्तव्य जाननेके लिये समर्थ नही हूँ । ४३. इस समय क्या करना योग्य है वह मुझे आप बतलाइये ।

४४. हा किम् इदम् आपतितम्? किम् इदम् अकृत्यम् अनुष्ठितम्?
४५. आः पापे दुष्कृत-कारिणि दुर्विनीते महाश्वेते, किम् अनेन ते अपकृतम्? क.
४६. सखे प्रतिपालय माम्। पु.
४७. देहि मे प्रतिवचनम्।
४८. युग-सहस्रायमाणः कृच्छ्रेण नीतः दिवसः। म.
४९. पूरय मे मनोरथम्। म.
५०. आर्ता अस्मि। भक्ता अस्मि। अनुरक्ता अस्मि। अनाथा अस्मि। बाला अस्मि। अगतिका अस्मि। दुःखिता अस्मि। अनन्य-शरणा अस्मि। म.
५१. किम् इति न करोषि दयाम्। कथय किम् अपराद्धम्। किं वा न अनुष्ठितं मया, कस्यां वा न आज्ञायाम् आदृतम्, कस्मिन् त्वदनुकूले न अभिरतम्? म.
५२. हा हता अस्मि मन्दभागिनी;
५३. धिक् मां दुष्कृतकारिणीम्; न अस्ति मत्सदृशा नृशंस-हृदया; म.
५४. किं मे गृहेण, किम् अम्बया, किं वा तातेन, किं बन्धुभिः, किं परिजनेन? म.
५५. हा, कम् उपयामि शरणम्? मयि दैव दर्शय दयाम्। विज्ञापयामि त्वाम्। कुरु कृपाम्। पाहि वनिताम् अनाथाम्। भगवत्यः वनदेवताः प्रसीदत। अव वसुन्धरे।
५६. मुहुः च तरलिकां कण्ठे गृहीत्वा प्रारुदम्। म.
५७. भगवति, मया पापेन तव अयं पुनः अभिनवतां नीतः शोकः, येन ईदृशीं दशाम् उपनीता असि। तत् अलम् अनया कथया। संह्रियताम् इयम्। अहम् अपि असमर्थः श्रोतुम्। च.

४४. हाय हाय! यह कौनसी आपत्ति आ पड़ी? न करना चाहिये ऐसा यह क्या कर चुका। ४५. हे पापिनी, दुष्कृतकारिणी, दुष्ट महाश्वेता, इसने तेरा क्या बिगाड़ किया? ४६. सखी मेरी प्रतीक्षा करो। ४७. मुझे प्रत्युत्तर दे। ४८. हजारों युगके समान प्रतीत होनेवाला यह दिन बड़े कष्टसे बिताया। ४९. मेरा मनोरथ पूर्ण करो। ५०. मैं आर्त हूँ, भक्त हूँ, अनुरक्त हूँ, अनाथ हूँ, कन्या हूँ, अगतिक हूँ, दुःखी हूँ, अनन्य शरण हूँ। ५१. दया क्यों नही करते? कहिये मैंने क्या अपराध किया? मैंने कौनसी आज्ञा न मानी? आपके अनुकूल ऐसी कौनसी बातमें रत न हुआी? ५२. हाय! मैं मन्दभागिनी नष्ट हो गयी! ५३. दुष्कृत्य करनेवाली मुझको धिक्कार है; मेरे समान क्रूर अंतःकरणवाली कोई नहीं होगी; ५४. घर, पिता, माता, बांधव, और सेवकोंका मुझे क्या करना है। ५५. हाय! मैं किसकी शरण जाऊं? दैव मुझपर दया करो, मैं प्रार्थना करती हूँ मुझपर कृपा करो, इस अनाथ अबलाका रक्षण करो। पूज्य वनदेवताओ, कृपा करो। पृथ्वीमाता मेरी रक्षा करो। ५६. तरलिकाके गलेमें बाँह डालकर मै बारबार रोई। ५७. मुझ पापी द्वारा आपका शोक पुनः नया कराया गया जिसके कारण आपकी यह दशा हुई। यह कथा पर्याप्त हो चुकी अब इसे बन्द करें। मैं भी इसे सुननेमें असमर्थ हूँ।

५८. राजपुत्र, या तदा हत-निशायाम् एभिः अतिनृशंसैः असुभिः न परित्यक्ता ते माम् इदानीं परित्यजन्ति इति दूरापेतम्। नूनं पापायाः मम भगवान् अन्तकः अपि परिहरति दर्शनम् । म.

५९. कुतः च मे कठिन-हृदयायाः शोकः ? म.

६०. अयि उत्तिष्ठ निष्ठुर-हृदये,कियत् रोदिषि ? म.

६१. किंकर्तव्य-मूढा च तरलिकाम् अब्रवम् । म.

६२. न च जीवन् कपिञ्जलः भर्तृदारिकाम् अदृष्ट्वा स्थास्यति । त.

६३. आशया हि किम् इव न क्रियते ? म.

६४. बलवती च नियतिः । म.

६५, सा च मे जन्मनः प्रभृति एकासन-शयन-पानाशना परं प्रेम-स्थानम् अखिल-विस्रम्भ-धाम द्वितीयम् इव हृदयं बालमित्रम् । म.

६६. सखीजनस्य पुरतः शपथम् अभिहितवती । म.

६७. सर्वं च तत् आत्म-दुहितुः कृत-निश्चल-भाषितं कर्ण-परम्परया परिजन-सकाशात् गन्धर्वराजः चित्ररथः स्वयम् अशृणोत् । म.

६८. एकापत्यतया न शक्तः किंचित् अपि ताम् अभिधातुम् । म.

६९. इदानीं तु कादम्बरीम् अनुनेतुं त्वं शरणम् इति सन्दिश्य मत्समीपं प्रत्युषसि प्रेषितवान् । म.

५८. राजपुत्र, जिन निर्दय प्राणोंने उस क्रूर निशामें मुझे न छोड़ा वह अब मुझे छोड़ेंगे यह तो असंभव है । सचमुच भगवान यम भी मुझ पापिनीको देखना नहीं चाहते । ५९. कठिन हृदयवाली मुझको शोक भी कैसे होगा ? ६०. ऐ कठोर हृदये, उठ । कितना रोवेगी ? ६१. किंकर्तव्यविमूढ़ होकर में तरलिकाको बोली । ६२. कपिञ्जल जीवित रहता हुआ देवीजीसे मिले बिना नहीं रहेगा । ६३. आशा क्या नहीं करवाती ? ६४. भवितव्यता बलवती है । ६५. जन्मसे हमारा खाना पीना बैठना सोना साथसाथ ही होता है और हम दोनों परस्परके प्रेम और विश्वासके स्थान हो गयीं हैं । वह मेरी बाल-सखी मानो मेरा दूसरा हृदय है । ६६. सखियोंके सामने सौगंदपूर्वक बोली । ६७. आपकी पुत्रीद्वारा निश्चयपूर्वक किया गया सब भाषण गंधर्वराज चित्ररथने सेवकोंसे और कर्ण परंपरासे स्वयं सुना । ६८. एकमात्र अपत्य होनेके कारण वह उसको कुछ कह नहीं सका । ६९. अब कादम्बरीको समझानेके लिये तुम्हीं समर्थ हो ऐसा सन्देश कहकर उसको प्रातःकाल मेरे पास भेजा ।

७०. 'सखि कादम्बरि, किं दुःखितम् अपि जनम् अतितरां दुःखयसि? जीवन्तीम् इच्छसि चेत् मां तत् कुरु गुरु-वचनम् अवितथम्' इति सन्दिश्य विसर्जिता। म.

७१. न अतिचिरं गतायां च तस्याम् अनन्तरम् एव इमां भूमिम् अनुप्राप्तः महाभागः। म.

७२. किं त्वया दृष्टा प्रियसखी कादम्बरी कुशलिनी? करिष्यति वा तत् अस्मद्वचनम्? म.

७३ गच्छ। स्वयम् एव अहम् आगत्य यथार्हम् आचरिष्यामि। म.

७४. यदि न अतिखेदकरम् इव गमनं कलयसि, न अवसीदति वा गुरु-प्रयोजनम्, अदृष्टचर-विषय-कुतूहलि वा चेतः, मद्वचनम् अनुरुध्यते वा भवान्, अतिसुखदायि वा आश्चर्य-दर्शनम्, इमम् अप्रत्याख्यान-योग्यं वा जनं मन्यसे, समारूढः वा परिचय-लेशः, अनुग्राह्यः वा अयं जनः, ततः न अर्हसि निष्फलां कर्तुम् अभ्यर्थनाम् इमाम्। इतः मया एव सह गत्वा हेमकूटम् अतिरमणीयता-निधानम्, तत्र दृष्ट्वा च मन्निर्विशेषां कादम्बरीम्, अपनीय तस्याः कुमति-मनोमोह-विलसितम्, एकम् अहः विश्रम्य श्वोभूते प्रत्यागमिष्यसि। म.

७५. श्रावयित्वा स्ववृत्तान्तम् इमं सह्यताम् इव गतः शोकः। म.

७६. दुःखितम् अपि जनं रमयन्ति सज्जन-समागमाः। म.

---

७०. ऐ कादम्बरी, जो पहलेसेही दुःखित है उसे पुनः क्यों दुःख दे रही है। मैं जीवित रहूँ ऐसी यदि तेरी इच्छा हो तो गुरुजनोंके कहनेके अनुसार आचरण कर—ऐसी आज्ञा देकर मैंने उसे वापस भेज दिया। ७१. उसके जानेके पश्चात् शीघ्रही आप यहां आ पहुचे। ७२. तू कादम्बरीसे मिली? वह सकुशल है? वह अपना कहना सुनेगी? ७३. जाओ, मैं स्वतः ही आकर जो योग्य होगा सो करूँगी। ७४. गमन करनेसे यदि अति कष्ट प्रतीत न हो, किसी महत्वके कार्यमें बाधा न पहुंचती हो, नई बात देखनेकी मनमें उत्कंठा हो, मेरे कहनेको यदि आप मान देते हो, आश्चर्यकारक दृश्य देखनेसे आपको यदि परमसुख होता हो, मुझे 'ना' कहना न चाहिये ऐसा यदि आप मानते हों, अल्पसा भी परिचय प्रस्थापित हुआ हो, अथवा मैं अनुग्रहके यदि योग्य हूँ तो मेरी यह प्रार्थना आप अस्वीकार न करें। यहाँसे मेरे साथ रमणीयताका निवासस्थान जो हेमकूट वहाँपर चलकर, मुझसे अभिन्न ऐसी कादम्बरीसे मिलकर, उसके मनमें प्रविष्ट हुए पागलपनको हटाकर, एक दिन आराम कर कल लौट आइये। ७५. अपनी यह कहानी आपको सुना देनेके कारण मेरा शोक अब सह्य हो गया है। ७६. दुःखी जनोंको भी सज्जनोंका समागम आनंद देता है।

# कालिदासस्य विक्रमोर्वशीयम्

( रा. = राजा, अ. = अप्सरसः, वि. = विदूषकः, चि. = चित्रलेखा उ. = उर्वशी, दे. = देवी, क. = कञ्चुकी )

१. अपि ज्ञायते कतमेन दिग्विभागेन गतः स जाल्मः ? रा.

२. ऐशान्या दिशा । अ.

३. तेन हि मुच्यतां विषादः । यतिष्ये वः सखी-प्रत्यानयनाय । रा.

४. सदृशम् एतत् सोम-वंश-सम्भवस्य । अ.

५. क्व पुनर् मां भवत्यः प्रतिपालयिष्यन्ति ? रा.

६. साधु साधु ! अनेन रथ-वेगेन पूर्व-प्रस्थितं वैनतेयम् अपि आसादयेयम्, किं पुनः तम् अपकारिणं मघोनः ? रा.

७. अये गन्धर्वराजः ! स्वागतं प्रियसुहृदे । रा.

८. (परस्परं हस्तौ स्पृशतः)

९. महत् खलु तत्रभवतः मघोनः प्रियम् अनुष्ठितं भवता । चित्ररथः

१०. ननु वज्रिणः एव वीर्यम् एतत् । रा.

११. अनुत्सेकः खलु विक्रमालङ्कारः । चित्ररथः

१२. भवति निपुणिके, संगीतव्यापारम् उज्झित्वा कुत्र प्रस्थिता असि ? वि.

१३. देव्याः वचनेन आर्यम् एव प्रेक्षितुम् । निपुणिका

१४. रक्ष्यते भवता रहस्य-निक्षेपः? रा.

१५. किं भवान् तूष्णीम् आस्ते । रा.

१६. नास्ति अगतिः मनोरथानाम् । रा.

१७. प्रसन्नः ते तर्कः । रा.

१. वह दुष्ट कौनसी दिशाको गया है यह आप जानती हैं क्या ? २. ईशान्य दिशाको गया है । ३. अब आप शोक न करें । आपकी सखीको वापस लानेका में प्रयत्न करूँगा । ४. सोमवंशमें उत्पन्न होनेवालोंके सदृश ही यह है । ५. आप कौनसी जगहपर मेरी प्रतीक्षा करेंगी ? ६. वाह! वाह! रथके इस वेगसे तो पहले गया हुआ गरुड़ भी पकड़ा जा सकता है, फिर इन्द्रके उस अपकारीकी बात ही क्या है ? ७. अरे यह तो गन्धर्वराज है ! प्रिय मित्रका स्वागत है । ८. (परस्पर हाथ मिलाते हैं) । ९. आपने इन्द्रका यह बहुत ही प्रिय कार्य किया है । १०. यह सब इन्द्रका ही पराक्रम है । ११. निरभिमानता ही शौर्यका आभूषण है । १२. अयि निपुणिके, गायन करना छोड़कर कहाँ जा रही हो ? १३. देवीके कहनेसे आपको ही देखने । १४. तुम्हें जो रहस्य सौंपा है वह तुमने गुप्त रखा है ना ? १५. अरे तुम मौन क्यों हो ? १६. मनोरथ न जा सकें ऐसा कोई स्थान नहीं । १७. आपका तर्क बराबर है ।

१८. यत् अत्र अभिलिखितं तत् श्रोतुम्-इच्छामि । वि.

१९. एतत् आसनम् आस्यताम् । रा.

२०. श्रुतं त्वया देवदूतस्य वचनम् । तत् अनुजानीहि महाराजम् । चि.

२१. नास्ति मे वाग्विभवः । उ.

२२. उपनय भूर्जपत्रम् । रा.

२३. हा कथं न दृश्यते ! वि.

२४. ननु विचिनुहि । इतः भवेत्, अत्र वा भवेत् । वि.

२५. मूढ, न अयं परिहास-कालः । रा.

२६. समयः खलु स्नान-भोजने सेवितुम् । वि.

२७. कथम् अर्धं गतं दिवसस्य । रा.

२८. कथा-प्रसङ्गेन अपराद्धा अभिषेक-वेला । पेलवः

२९. अत्यासन्नेन चन्द्रोदयेन भवितव्यम् । यथा तिमिरेण अतिरिच्यमानं पूर्व-दिशा-मुखम् आलोहित-प्रभं दृश्यते । वि.

३०. अयि भो ! उपस्थिता देवी । तत् सुमुद्रित-मुखः भव । वि.

३१. सखि उर्वशि, अकातरा भूत्वा विसर्जय माम् । चि.

३२. सखि मा खलु मां विस्मरिष्यसि । उ.

३३. वयस्येन संगता त्वम् एव याचितव्या । चि.

३४. (नेपथ्ये) हा धिक् हा धिक् । एष मौलि-रत्नतायां योजितः मणिः आमिष-शङ्किना गृध्रेण आक्षिप्तः ।

१८. इसमें जो लिखा है वह मैं सुनना चाहता हूँ । १९. इस आसनपर बैठिये । २०. तूने देवदूतका कहना सुन लिया है, अब महाराजसे बिदा माँग ले । २१. मेरी वाणीमें सामर्थ्य नहीं है । २२. वह पत्र पासमें लाओ । २३. अरे वह क्यों नहीं मिल रहा है । २४. उसका खोज करिये न । इधर उधर कहीं होगा । २५. मूर्ख, यह विनोदका समय नहीं है । २६. स्नान-भोजन करनेका समय हो गया । २७. अरे, कैसे आधा दिन व्यतीत हो गया ! २८. बातचीतमें स्नानका समय निकल गया । २९. चन्द्रोदय शीघ्र ही होना चाहिये, क्योंकि अंधकार विहीन होता हुआ पूर्वदिशाका मुख लालिमायुक्त दिखाई दे रहा है । ३०. महाराज, देवीजी आ गई है, अतः मौन हो जाइये । ३१. सखी उर्वशी, व्याकुल न होते हुए मुझे जानेकी आज्ञा दे । ३२. सखी, मुझे भूल न जाना । ३३. यह याचना तो प्रिय मित्रके साथ रहनेवाली तुझसे मुझे करनी चाहिये । ३४. (परदेके अन्दर) अरे अनर्थ हो गया ! इस शिखामणिको माँसका टुकड़ा समझकर गृद्ध झपटकर ले गया ।

३५. न दृश्यते विहङ्गाधमः। किम् इदानीं धनुषा ? बाणपथातीतः क्रव्यभोजनः। रा.

३६. (ततः प्रविशति सशरं मणिम् आदाय कञ्चुकी)

३७. आर्य ! जानाति भवान् कस्य अयं बाणः इति ? रा.

३८. नामाङ्कितः दृश्यते। न अत्र मे वर्ण-विभाव-सहा दृष्टिः। कं.

३९. तत् उपश्लेषय शरं यावत् निरूपयामि। रा.

४०. (प्रविश्य) जयतु जयतु देवः। देव, च्यवनाश्रमात् कुमारं गृहीत्वा तापसी संप्राप्ता देवं द्रष्टुम् इच्छति। क.

४१. उभयम् अपि अविलम्बितं प्रवेशय। रा.

४२. ननु एष क्षत्रिय-कुमारः, यस्य नामाङ्कितः गृध्र-लक्ष्य-वेधी नाराचः उपलब्धः, तत्रभवतः बहु अनुकरोति। वि.

४३. जात, प्रणम गुरुम्। ता.

४४. वत्स, आयुष्मान् भव। रा.

४५. भगवति, किम् आगमन-प्रयोजनम् ? रा.

४६. शृणोतु महाराजः। एष दीर्घायुः आयुः जातमात्रः एव उर्वश्या किम् अपि निमित्तम् अपेक्ष्य मम हस्ते न्यस्तीकृतः। एष भर्तुः समक्षं निर्यातितः सखी-हस्त-निक्षेपः। तत् युष्माभिः विसर्जितम् आत्मानम् इच्छामि। उपरुध्यते मे आश्रमधर्मः। ता.

३५. वह दुष्ट पक्षी दिखाई नहीं दे रहा है। इस समय धनुषका क्या उपयोग? वह माँसभक्षी पक्षी बाणपथके बाहर गया है। ३६. (बाणसहित मणिको लेकर कंचुकी प्रवेश करता है)। ३७. आर्य, आप जानते हैं यह किसका बाण है ? ३८. नाम लिखा हुआ दिखता है, किन्तु मेरी दृष्टि वर्ण पढ़नेमें समर्थ नहीं है। ३९. तो बाण मेरे पास लाओ, मैं पढ़ता हूँ। ४०. (प्रवेश करके) महाराजकी जय हो। च्यवन आश्रमसे कुमारको लेकर तापसी आई है, आपसे मिलना चाहती है। ४१. दोनोंको शीघ्र ले आओ। ४२. गृध्रको मारनेवाला यह बाण जिसके नामका है वह यह क्षत्रिय कुमार आपसे बहुत कुछ मिलता हुआ है। ४३. वत्स, गुरुको प्रणाम करो। ४४. पुत्र, आयुष्यमान होओ। ४५. भगवती, आपका आगमन किसलिये हुआ है ? ४६. सुनिये महाराज ! इस दीर्घायु बालकको जन्मते ही उर्वशीने किसी कारणसे मुझे सौंप दिया था। मैं उसे आपके सामने लौटा रही हूँ। अब मैं आपसे बिदा होना चाहती हूँ। मेरे आश्रम धर्ममें रुकावट आवेगी।

४७. तत्रभवते च्यवनाय मम प्रणामम् आवेदयिष्यसि। रा.
४८. एवं भवतु। ता.
४९. जात,गुरोः वचनम् अनुतिष्ठ। ता.
५०. भगवति, पादवन्दनं करोमि। उ.
५१. भगवति, प्रणमामि। रा.
५२. स्वस्ति भवतु युष्मभ्यम्। ता.
(इति निष्क्रान्ता)

४७. आप च्यवन महाराजको मेरा प्रणाम कहिये। ४८. ऐसा होगा। ४९. वत्स, पिताजीका कहना मानना। ५०. भगवती, मैं चरणोंका वन्दन करती हूँ। ५१. भगवती, मैं प्रणाम करता हूँ। ५२. तुम दोनोंका कल्याण हो (जाते हैं)।

---

# सुभाषितानि

## भारवेः किरातार्जुनीयम्

१. हितं मनोहारि च दुर्लभं वचः। १।४
२. व्रजन्ति ते मूढधियःपराभवं भवन्ति मायाविषु ये न मायिनः। १।३
३. निवसन्ति पराक्रमाश्रया न विषादेन समं समृद्धयः। २।१५
४. न महानिच्छति भूतिमन्यतः। २।१८
५. ज्वलितं न हिरण्यरेतसं चयमास्कन्दति भस्मनां जनः। २।२०
६. अभिभूतिभयादसूनतः सुखमुज्झन्ति न धाम मानिनः। २।२०
७. सहसा विदधीत न क्रियाम् अविवेकः परमापदां पदम्। २।३०
८. प्रशमाभरणं पराक्रमः। २।३२
९. विपदन्ता ह्यविनीत-सम्पदः। २।५२
१०. मुखरताऽवसरे हि विराजते। ५।१६

१. हितकर होते हुये मनोहर भी हो ऐसा भाषण कठिनतासे मिलता है। २. कपटीके साथ कपटपूर्ण व्यवहार न करनेवालेकी पराजय होती है। ३. ऐश्वर्य पराक्रमके साथ रहता है, निराशाके साथ नहीं। ४. महान पुरुष अन्योंसे वैभव मिलनेकी इच्छा नहीं रखते। ५. भस्मकी राशिको पैरसे लोक कुचलते है, जलती हुई अग्निको नही। ६. मानी पुरुष मानहानिका भय उपस्थित हो जानेपर अपने प्राण प्रसन्नता पूर्वक त्याग देते हैं किन्तु मान नहीं छोड़ते। ७. बिना विचार किये जल्दीमें कोई कार्य नहीं करना चाहिये। अविचारके कारण अनेक आपत्तियाँ प्राप्त होती हैं। ८. शान्ति पराक्रमकी शोभा है। ९. विनयरहित सम्पत्ति अन्तमें दुःखका कारण होती है। १०. अधिक बोलना समयपर ही शोभा देता है।

११. संभावना ह्यधिकृतस्य तनोति तेजः । ६।४६
१२. रम्यणां विकृतिरपि श्रियं तनोति। ७ । ५
१३. नाल्पीयसान् बहुसुकृतं हिनस्ति दोषः । ७।१५
१४. सा लक्ष्मीरुपकुरुते यया परेषाम् । ७।२८
१५. वसन्ति हि प्रेम्णि गुणा न वस्तुषु । ८।३७
१६. दुःखिते मनसि सर्वमसह्यम् । ९।३०
१७. प्रेम पश्यति भयान्यपदेषु । ९।७०
१८. हरति मनो मधुरा हि यौवन-श्रीः । १०।१७
१९. शरदम्बुधरच्छायागत्वर्यो यौवन-श्रियः । ११।१२
२०. साधु-वृत्तानपि क्षुद्रा विक्षिपन्त्येव सम्पदः ११।२६
२१. न्यायाधारा हि साधवः । १०।३०
२२. जन्मिनो मानहीनस्य तृणस्य च समा गतिः । ११।५९
२३. पुरुषस्तावदेवासौ यावन्मानान्न हीयते । ११।६१
२४. किमिवास्ति यन्न सुकरं मनस्विभिः १२।६
२५. सज्जनैक-वसतिः कृतज्ञता । १३।५१
२६. प्रेम युक्तमितरेतराश्रयम् । १३।५७
२७. सुदुर्लभाः सर्वमनोरमा गिरः । १४।५
२८. दिशत्यपायं हि सतामतिक्रमः । १४।९

११. कार्यपर नियुक्त किये गये व्यक्तिका सन्मान उसके तेजको बढ़ाता है। १२. सुन्दर वस्तुमें होनेवाला विकार भी उसकी शोभाको बढ़ा देता है। १३. छोटासा कोई दोष बहुतसे अच्छे किये हुएका नाश नहीं कर सकता। १४. जिसके द्वारा दूसरोंका उपकार हो वही सम्पत्ति है। १५. गुण प्रेममें रहते है, वस्तुमें नहीं। १६. दुःखित मनके लिये सबकुछ असह्य है। १७. स्नेह भयरहित स्थानमें भी भय देखता है। १८. युवावस्थाका मधुर सौंदर्य मनको आर्कषित कर लेता है। १९. शरत्कालके मेघोंकी छायाके समान युवावस्थाका सौंदर्य क्षणभंगुर है। २०. संपत्ति अच्छे स्वभाववालोंको भी विक्षेप पहुँचाती है। २१. साधु पुरुष सदा न्यायका अवलंबन करते हैं। २२. मानरहित पुरुष तृणके समान तुच्छ है। २३. पुरुषकी मानहानि नहीं होती तभीतक वह मनुष्य है। २४. निश्चयी पुरुषोंके लिये न हो सके ऐसा कौनसा कार्य है? २५. सज्जनोंमें ही कृतज्ञता वास करती है। २६. प्रेम दोनोंके परस्पर आश्रयसे रहता है। २७. सबको प्रिय हो ऐसी वाणी दुर्लभ है। २८. सज्जनोंका अपमान किया जाना हानिका द्योतक है।

२९. सतां हि वाणी गुणमेव भाषते । १४।११
३०. व्रताभिरक्षा हि सतामलंक्रिया । १४।१४
३१. भवत्यपाये परिमोहिनी मतिः । १४।१९

**महाभारतात्—**

३२. अवज्ञानं हि लोकेऽस्मिन् मरणादपि गर्हितम् । ३।२८।१२
३३. एकत्र चिर-वासो हि न प्रीतिजननो भवेत् । ३।३६।३६
३४. सन्तः परार्थं कुर्वाणा नावेक्षन्ते परस्परम् । ३।२९७ ३९
३५. मुहूर्तं ज्वलितं श्रेयो न च धूमायितं चिरम् । ५।१३३।१५
३६. निरीहो नाश्नुते महत् ।५।१३३।३४
३७. सम्भावितस्य चाकीर्तिर्मरणादतिरिच्यते । ६।२८।३८
३८. नहि ज्ञानेन सदृशं पवित्रमिह विद्यते । ६।२८।३८
३९. न हि कल्याणकृत् कश्चित् दुर्गतिं तात गच्छति । ६।३०।४०
४०. स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः । ६।४२।४५
४१. गुरूणामवमानो हि वध इत्यभिधीयते । ८।७०।५१
४२. अनारम्भात्तु कार्याणां नार्थः सम्पद्यते क्वचित् । १०।२।३४
४३. भूतिः श्रीर्ह्रीर्धृतिः कीर्तिर्दक्षे वसति नालसे । १२।२७।३२
४४. उदाराणां तु सत्कर्म दैवं क्लीबा उपासते । १२।१३९।८२

२९. सज्जनोंकी वाणी गुणोंका ही वर्णन किया करती है । ३०. व्रतकी रक्षा करना ही सज्जनोंकी शोभा है । ३१. कोई अनिष्ट होनेवाला हो तो मनुष्यकी बुद्धि मोहित हो जाती है ।

**महाभारतसे —**

३२. इस लोकमें अपमान होना मरणसे भी खराब है । ३३. बहुत दिनोंतक एक ही जगह रहनेसे प्रीति उत्पन्न नहीं होती । ३४. सज्जन लोग दूसरेका कार्य करते हुए परस्परोंकी अपेक्षा नहीं करतें । ३५. धूँवा निकलते हुये बहुत देरतक धीरे धीरे जलते रहनेकी अपेक्षा थोड़ी देर भी प्रज्वलित होकर जलना श्रेयस्कर है । ३६. महत्वाकांक्षा न रखनेवाला किसी भी महत्वकी वस्तुको प्राप्त नहीं कर सकता । ३७. मानी पुरुषकी अपकीर्ति मृत्युसे भी अधिक दुःखदायक है । ३८. संसारमें ज्ञानके समान पवित्र और कुछ नहीं है । ३९. सत्कर्म करनेवाला कभी दुर्गतिको प्राप्त नहीं होता । ४०. अपने-अपने कर्ममें तत्पर मनुष्यको सिद्धि प्राप्त होती है । ४१. गुरुजनोंका अपमान करना ही उनका वध कहा गया है । ४२. कार्यका आरंभ न किया जाय तो इच्छित वस्तु कभी प्राप्त नही होती । ४३. ऐश्वर्य, संपत्ति, विनय, धैर्य और कीर्तिका निवास दक्ष पुरुषमें होता है, आलसी पुरुषमें नही । ४४. श्रेष्ठ पुरुष सत्कर्मका आश्रय करते हैं, किन्तु पौरुषहीन पुरुष दैवके आश्रयपर निर्भर रहते हैं ।

४५. अनायुष्यं दिवा स्वप्नं तथाऽभ्यु-दित-शायिता। १३।१०४।३९

४६. नह्यनुप्तं प्ररोहति । १३।१६३। ११

४७. यतो धर्मस्ततो जयः। १३।१६७। ४१

**रामायणात्—**

४८. मृदुर्हि परिभूयते । २।२१।११

४९. मुमूर्षूणां च सर्वेषां यत्पथ्यं तं न रोचते । ३।५३।१७

५०. उत्साहवन्तः पुरुषा नावसीदन्ति कर्मसु । ४।१।१२२

५१. कृते च प्रतिकर्तव्यमेष धर्मः सनातनः । ५।१।१०६

५२. धिगस्तु पर-वश्यताम् । ५।२५।२०

५३. कोपं न गच्छन्ति हि सत्ववन्तः। ५।५२।१६

५४. ऐश्वर्य-मद-मत्तो हि सर्वोऽहमिति मन्यते । ५।६४।९

५५. सर्वे चण्डस्य बिभ्यति। ६।२।२०

५६. अवश्यं प्राणिना प्राणा रक्षितव्या यथाबलम् । ६।९।११

५७. गर्जन्ति न वृथा शूरा निर्जला इव तोयदाः । ६।६५।३

५८. कार्याणां कर्मणा पारं यो गच्छति स बुद्धिमान्। ६।८८।३

५९. सन्तश्चारित्र-भूषणाः । ६।११५। ४२

६०. यादृशं कुरुते कर्मं तादृशं फलम श्नुते । ७।१५।२३

४५. दिनको सोना और सूर्योदयके पश्चात् सोते रहना आयु क्षीण करता है। ४६. बिना बोये उगता नहीं । ४७. जहाँ धर्म है वहीं जय है।

**रामायणसे—**

४८. नरमकी ही अवज्ञा की जाती है। ४९. जिनकी मृत्यु निकट आगई है उन्हें पथ्यमें रुचि नहीं होती । ५०. जिन पुरुषोंमें उत्साह है वे कार्योंमें धीर नहीं छोड़ते । ५१. जिसने अपने लिये कुछ किया है, उसके लिये आपने भी कुछ करना चाहिये यह सनातन धर्म है। ५२. परतंत्रताको धिक्कार है। ५३. सत्त्ववाले पुरुष क्रोध नहीं करते। ५४. ऐश्वर्यके मदसे मत्त पुरुष सबकुछ मैं ही हूँ ऐसा समझा करते हैं। ५५. क्रोधी पुरुषसे सभी डरते हैं ५६. प्राणियोंको प्राणोंकी रक्षा अवश्य करनी चाहिये। ५७. निर्जल मेघोंके समान बलवान निरर्थक गर्जना नही किया करते। ५८. क्रियाकें द्वारा जो कार्यको पूरा कर लेता है, वही बुद्धिमान है। ५९. सन्त पुरुषोंका चरित्र ही आभूषण है। ६० जैसा कर्म करेगा वैसा ही फल मिलेगा।

---

संस्कृत-भाषा-प्रचारि-सभायाः

# मौखिक-संस्कृत-परीक्षाः

संस्कृत-भाषाप्रचारि-सभायाः निम्न-लिखित-मौखिक-परीक्षाः प्रतिवर्षं भविष्यन्ति। एताः सर्वाः परीक्षाः मौखिक्यः एव वर्तन्ते। परीक्षाः प्रतिवर्षं द्विवारं ख्रिस्ताब्दस्य प्रथमे मासि अष्टमे मासि च (एवं हेमन्ततौँ वर्षतौँ च) भविष्यन्ति। द्वयोः परीक्षयोः मध्ये भवेत् षण्मासानाम् अन्तरम्। नागपुर-स्थाः नागपुरात् बहिःस्थाः च परीक्षार्थिनः बालक-बालिकाः च परीक्षार्हाः भवेयुः। परीक्षा-शुल्कं प्रतिछात्रं चतुराणकं केवलम्। यदि दशसंख्याधिकाः परीक्षार्थिनः आवेदन-पत्रं सर्वकार-मान्य-विद्यालयस्य मुख्याध्यापकद्वारा प्रेषयिष्यन्ति तर्हि परीक्षा-केन्द्रस्य आयोजनं मुख्याध्यापक-महाभागस्य सहकार्येण कर्तुं शक्यते। आवेदन-पत्राणि परीक्षाशुल्केन सह परीक्षा-मासस्य मासपूर्वं प्रेषणीयानि। आवेदन-पत्रे परीक्षार्थिनः नाम, पितुः नाम, कुल-नाम, वयः, पाठशालां, निवास-स्थानं, केन्द्र-नाम च लिखन्तु। परीक्षोत्तीर्णच्छात्रेभ्यः प्रमाण-पत्राणि प्रदीयन्ते यथासमयम्। श्रेणिगुणानां प्रतिशतता अधोलिखिता भवेत्—

| | |
|---|---|
| प्रथम-श्रेणिः | ८०-१०० |
| द्वितीय-श्रेणिः | ६०-७९ |
| तृतीय-श्रेणिः | ४०-५९ |
| प्रावीण्यम् | ९०-१०० |

एतासां परीक्षाणां नामानि पाठ्य-क्रमः पुस्तक-नामानि च अधः लिख्यन्ते। पाठ्य-क्रमान्तर्गतानां द्वादश-पाठ्य-पुस्तिकानां मूल्यम् आणक-द्वयं प्रत्येकम्।

## प्रथम-परीक्षा-

१. बालामृत-शतश्लोकी*
२. सुलभ-शब्द-रूपावलिः*
३. व्यवहार-प्रश्नोत्तरी*

## द्वितीय-परीक्षा-

४. उपयुक्त-धातुरूपावलिः*
५. हितोपदेश-कथाः*
६. संक्षिप्तामरकोशः*
प्रथम-परीक्षायाः पाठ्य-क्रमः च।

## तृतीय-परीक्षा-

७. छात्रामृत-शतश्लोकी*
८. रामायण-कथा*
९. व्यवहार-सूक्तावलिः*
द्वितीय-परीक्षायाः पाठ्य-क्रमः च।

## संस्कृत-प्रवेश-परीक्षा-

१०. महाभारत-कथाः*
११. नाट्य-प्रवेशः
१२. कौमुदी-प्रवेशः
तृतीय-परीक्षायाः पाठ्य-क्रमः च।

*मुद्रिताः धर्मपीठम्, नागपुरम् १

स. ना. कुलकर्णी
सं. भा. प्र. सभायाः
प्रमुख-कार्यवाहः



इयं पुस्तिका वर्धानगरस्थ-राष्ट्रभाषा-प्रचार-समितेः मुद्रणालये मुद्रिता नागपुरस्थ-संस्कृतभाषाप्रचारि-सभाद्वारा प्रमुख-कार्यवाहेन धर्मपीठे कुलकर्णी-भवने प्रकाशतां च नीता।

(10)

संस्कृत-भाषा-प्रचार-वाङ्मयमाला

# महाभारत-कथा:

[ बालानां कृते ]

( हिन्दी-मराठी-संस्करणम् )



श्रीमताम् अग्रवाल-कुलावतंसानां
नरसिंगदास-मोर-महोदयानां
दानानुग्रहफलम् इदम् ।

रचयिता—प्रा. श्री. भा. वर्णेकरः



९०

दशमं पुष्पम् ]     १९५४     [ मूल्यम् आणक-द्वयम्

# हृद्गतम् ।

परां मुदं प्राप्नोति मे मनः संस्कृत-भाषा-प्रचार-वाङ्मय-मालायाः इदं दशमं पुष्पं संस्कृतानुरागिभ्यः समर्पयितुम्। भारतीयानाम् अस्माकं महाभारतं परमः प्राचीनः इतिहास-ग्रन्थः। सः निधानं ज्ञानस्य, विमानं व्यवहारस्य, निकेतनं नीति-तत्त्वानाम्, सदनं सदाचाराणाम्, आगरम् आदर्श-पुरुषाणाम्, विलास-वेश्म वाङ्मयस्य। स्त्री-शूद्र-द्विज-बन्धूनां वेदोपनिषत्तत्त्वानां सुख-बोधाय भारतम् आख्यानम् परमकारुणिकेन महामुनि-व्यासेन कृतम्। अस्मिन् ग्रन्थे ये विषयाः अन्तर्भूताः तान् उद्दिश्य एव 'व्यासोच्छिष्टं जगत्सर्वम्' इति इयम् अभिमानोक्तिः। अस्याः विवरणं ग्रन्थकर्त्रा प्रथम-पाठस्य अन्त्ये उध्दृते श्लोकद्वये सुष्ठु कृतम्। तत्र महाभारतस्य, महाभारत-रचयितुः च माहात्म्यं मनोज्ञतया वर्णितम्।

महाभारतस्य विद्यन्ते अष्टादश पर्वाणि। प्रथम-पर्वणः नाम आदिपर्व इति। अस्यां पुस्तिकायाम् आदिपर्वणः केवलं अष्ट पाठाः दत्ताः। अष्टादश-पर्वात्मकस्य महाभारतस्य यथार्थ-दर्शनम् एवंभूतायां षोडशपत्रात्मिकायां पुस्तिकायाम् अशक्यम् एव। इयं पुस्तिका कथारूपेण महाभारतस्य अल्पं परिचयं केवलं ददाति यथा चित्रपटस्य आकर्षः (ट्रेलर)। प्रथमः पाठः ऐतिहासिकीं पार्श्वभूमिं पुरः स्थापयति, द्वितीये पाठे दुष्यन्त-शकुन्तलयोः मनोज्ञ-कथा कथ्यते, तृतीयः पाठः अद्भुतां भीष्म-जन्म-कथां वर्णयति, चतुर्थः पाठः भीष्मां प्रतिज्ञां कीर्तयति, पञ्चमे पाठे कौरव-पाण्डवानां बाल-लीलानां, कौरवाणां कुत्सित-कल्पनानां च दिग्दर्शनं क्रियते, षष्ठः पाठः कणिक-नीतेः परिचयं प्रदाय लाक्षागृहे पाण्डवान् दग्धुं कृतस्य कौरवाणां कुटिल-प्रयत्नस्य सम्यक् दर्शनं कारयति, सप्तमे पाठे द्रौपदी-स्वयंवरस्य विचित्रा कथा चित्रिता, अष्टमे पाठे च सुभद्राहरण—नाम्न्याः हृदयंगम-कथायाः वर्णनं कृतम् अस्ति।

बालानां कृते बुद्धिपुरःसरं विरचितासु आसु कथासु रचयित्रा केचन निर्बन्धाः ससंयमं पालिताः। भाषा सुलभा, सरला, सुबोधा, सन्धिहीना, दीर्घ-समास-रहिता च प्रयुक्ता। वाक्यानि ह्रस्वानि। सर्वाः कथाः हृद्याः सरसाः मनोहराः च कृताः। संस्कृत-वाङ्मये पञ्चतन्त्रं हितोपदेशं च विहाय विद्यते बालवाङ्मयस्य भृशम् अभावः। एतां न्यूनताम् अनया पुस्तिकया अंशतः दूरीकृत्य संस्कृत-वाङ्मयस्य नूतनं क्षेत्रम् इव उद्घाटितं बालवाचकानां कृते। मन्ये इयं ग्रन्थकर्तुः स्वल्पा कृतिः बालकानां बालिकानां च तोषाय भवेत्।

धर्मपीठम्, नागपुरम् १.
श्रावण-शुक्ल-पञ्चमी, शके १८७६
दिनांकः ३।८।५४

स. ना. कुलकर्णी
प्रमुख—कार्यवाहः
संस्कृत-भाषा-प्रचारिणी सभा,
नागपुरम्

# महाभारत-कथा:

## प्रथमः पाठः

## भरत-वंशः

आसीत् किल[१] दक्षनामा प्रजापतिः। तस्य वंशे ययातिः नाम राजा बभूव। ययातेः द्वे भार्ये बभूवतुः। शुक्राचार्यस्य कन्या देवयानी वृषपर्वणः च दुहिता शर्मिष्ठा नाम। देवयान्याः यदुः तुर्वसुः नाम पुत्रद्वयं, तथा शर्मिष्ठायाः द्रुह्युः अनुः पूरुः नाम पुत्रत्रयम् अजायत[२]। तत्र यदोः वंशजाः यादवाः, पूरोः वंशजाः च पौरवाः इति प्रसिद्धाः महाभारत-कथा-पुरुषाः कौरवाः पाण्डवाः च पूरु-वंशजाः आसन्।

पूरोः वंशे दुष्यन्त-नामधेयः सुविख्यातः राजा संबभूव। कालिदास-विरचितस्य अभिज्ञान-शाकुन्तल-नाटकस्य नायकः अयम् एव दुष्यन्तः। दुष्यन्तः विश्वामित्र-दुहितरं शकुन्तला-नाम्नीं उपयेमे[३]। तस्याम् अस्य भरतः नाम जगज्जेता पुत्रः संबभूव। भरत-वंशजाः सर्वे भारताः इति ख्यातिं गताः। श्रीव्यास-विरचिते सुविख्याते महाभारत-ग्रन्थे भरत-वंशजानाम् इतिहासः वर्णितः अस्ति।

भरतात् अनन्तरं चतुर्थः पुरुषः हस्ती नाम बभूव। अनेन हस्तिना हस्तिनापुरं नाम सुविख्यातं नगरं संस्थापितम्। तदनन्तरम् अस्मिन् भरतवंशे शान्तनुः नाम राजा अभवत्। शान्तनुः खलु भागीरथी[४]-गंगाम् उपयेमे। तस्याम् अस्य देवव्रतः नाम पुत्रः सञ्जातः। अयं देवव्रतः भीष्मः इति ख्यातिम् उपगतः। शान्तनोः सत्यवती नाम अन्या भार्या आसीत्। तस्याम् अस्य विचित्रवीर्यः चित्रांगदः च इति पुत्र-द्वयं संभूतम्। चित्रांगदः किशोरावस्थायां केनचित् गन्धर्वेण हतः। विचित्रवीर्यस्य अम्बा अम्बालिका च इति भार्याद्वयम् आसीत्। परम् असौ अनपत्यः[५] एव पञ्चत्वं जगाम[६]। तदा भरत-वंशस्य उच्छेदः[७] मा भवतु इति विचिन्तयन्ती शान्तनुभार्या सत्यवती स्वपुत्रं कृष्णद्वैपायनं मुनिं मनसा चिन्तयामास। अयं कृष्णद्वैपायनः मुनिः भगवान् व्यासः इति नाम्ना जगत्प्रसिद्धः। अनेन एव महाभारत

ग्रन्थः विरचितः। अयं व्यासः सत्यवत्याः पराशर-मुनेः पुत्रः। तस्मात् असौ पाराशर्यः इति उच्यते। स सद्यः[८] एव तस्याः पुरतः उपस्थितः। मातुः आदेशानुसारं स व्यासः अम्बालिकायां धृतराष्ट्र-पाण्डु-नामधेयौ द्वौ पुत्रौ उत्पादयामास। तृतीयः विदुर-नामा दासी-पुत्रः आसीत्। द्वैपायनस्य वरदानात् धृतराष्ट्रस्य गान्धार्यां पुत्र-शतं संबभूव। तेषु दुर्योधनः दुःशासनः विकर्णः चित्रसेनः इत्येते चत्वारः प्रधानाः आसन्। पाण्डोः दैवत[९]-प्रसादात् कुन्त्यां धर्मार्जुन-भीमसेनाख्याः त्रयः तथा माद्र्यां च नकुलसहदेवाख्यौ द्वौ इत्येव पञ्च-पुत्राः बभूवुः। धृतराष्ट्रस्य पुत्राः कौरवाः तथा पाण्डोः पुत्राः पाण्डवाः इति प्रख्याताः। एतेषां कौरवाणां पाण्डवानां च कुटुम्ब-कलहात् भारतीय-युद्धम् अभूत्। अस्य महायुद्धस्य इतिहासः महाभारत-ग्रन्थे महामुनिना व्यासेन सुरस-मधुरया संस्कृत-भाषया वर्णितः। अतः

नमोऽस्तु वेद-व्यासाय यस्य वाङ्मय-तेजसा।
सबाह्याभ्यन्तरं विश्वं सञ्जातं जनगोचरम्[१०]॥
अनाद्यनन्तः संसारः यत्रायं प्रतिबिम्बितः।
तं दिव्यं वाङ्मयादर्शं भारतं चिन्तये सदा॥

१. इतिहास-सूचक अव्यय। २. पैदा हुआ-- जन्मले। ३. ब्याही-- विवाह केला। ४. भगीरथके प्रयत्नसे प्राप्त— भगीरथाच्या प्रयत्नानें प्राप्त। ५. पुत्रहीन। ६. मरा-- मेला। ७. नाश। ८. तत्काल। ९. देवता-समूह। १०. लोगोंको ज्ञात--लोकांना ज्ञात।

---

## द्वितीयः पाठः

# दुष्यन्तः

पौरवाणां वंशे दुष्यन्तनामा महावीरः राजा बभूव। एकदा असौ ससैन्यः सामात्यः मृगयार्थं वनं गतः। तत्र वने स रम्यम् आश्रमं ददर्श। आश्रमे बहवः ऋषयः वेद-शास्त्राध्ययनं कुर्वन्ति स्म। परम् आश्रमाधिपतिः कण्वः तस्य दृष्टि-पथं न आयातः। तदा राजा "कः कोऽत्र भोः" इति उच्चैः जगाद। सहसा तस्मात् आश्रमात् तापस-वेष-धारिणी लक्ष्मीवत् रूपशालिनी काचित् युवती बहिः आगता तां रूप-यौवन-सम्पन्नां तरुणीं दृष्ट्वा भूपतिः साश्चर्यं पप्रच्छ, "हे सुन्दरि का त्वम्? कस्य कन्या असि?

किमर्थम् एतत्तपोवनम् आगता ?" सा तापस-वेष-धारिणी तरुणी प्राह—अहं मेनकायाम् उत्पन्ना विश्वामित्रस्य महामुनेः कन्या अस्मि। जन्मकाले एव मम जननी मां घोरे वने परित्यज्य निर्गता। तदा शकुन्तैः[१] संरक्षिता अहं कण्व-मुनिना अधिगता। एवं मां कण्व-दुहितरं शकुन्तला-नाम्नीं जानीहि इति।

सा रूपवती तरुणी क्षत्रिय-वंशजा अस्ति इति ज्ञात्वा, "त्वं मया सह गान्धर्व[२]-विधिना विवाहं कुरु" इति दुष्यन्तः तां प्रार्थयामास। शकुन्तला-आह "यदि मम पुत्रः त्वदनन्तरं युवराजः भवेत् तर्हि त्वया समं विवाहं करिष्यामि।" राजा उवाच "एवम् अस्तु"। एवं तयोः एकान्ते गान्धर्व-विधिना विवाहः सञ्जातः। दुष्यन्तः कंचित् कालं तत्र कण्वाश्रमे शकुन्तलया समम् उवास[३]।

अनन्तरं कण्वः आश्रमं प्रत्यागतः। शकुन्तलायाः दुष्यन्त-महाराजेन सह गान्धर्व-विधिना विवाहः सञ्जातः इति दिव्य-दृष्ट्या ज्ञात्वा प्रहर्षितः कण्वमुनिः

"महात्मा जनिता लोके पुत्रस्तव महाबलः।
य इमां सागरापाङ्गीं[४] कृत्स्नां[५] भोक्ष्यति मेदिनीम्॥"

इत्येवम् आशीर्वादं ददौ।

अथ दशमे मासि शकुन्तला तेजस्विनं पुत्रं सुषुवे[६]। षड्वर्षदेशीयः सः कुमारः सिंह-व्याघ्र-वराह-महिष-गजादीन् वन्यान् पशून् स्वबलेन 'दमयति[७] स्म। अतः स कुमारः 'सर्व-दमन' इति नाम समपद्यत[८]।

अनन्तरं सपुत्रां शकुन्तलां कण्वमुनिः हस्तिनापुर-वासिनः दुष्यन्तस्य समीपे प्राहिणोत्[९]। पति-समीपं गत्वा शकुन्तला प्राह, "राजन् स्व-समया[१०]-नुसारम् अयं तव पुत्रः युवराज-पदे अभिषिच्यताम्।"

तस्याः तद्वचनं श्रुत्वा पूर्व-चरितं सर्वं स्मरन् अपि "नाहं त्वां जा-नामि। हे दुष्ट-तापसि, त्वं कस्य कन्या कस्य वा भार्या असि" इति तां पप्रच्छ। दुष्यन्तस्य तत् कुलिश[११]-पातोपमं वचनं श्रुत्वा शकुन्तला कंचित् कालं दुःखेन

स्थूणावत्[१२] निःसंज्ञा[१३] बभूव। क्षणमात्रं च स्थित्वा सक्रोधं राजानं बभाण, "हे राजन् तव पूर्व-कृतं कर्म न कश्चित् जानाति इति मा मन्यस्व। यतः हि,

आदित्य-चन्द्रावनिलानलौ च द्यौ-र्भूमिरापो हृदयं यमश्च।
अहश्च रात्रिश्च उभे च सन्ध्ये धर्मोऽपि जानाति नरस्य वृत्तम्॥

एवं शकुन्तलया भृशम् उपदिष्टः अपि राजा तां न प्रत्यपद्यत[१४]। तदा तं निर्भर्त्स्य शकुन्तला पुत्रेण सह स्थानान्तरं गन्तुं प्रवृत्ता। तदानीम् सहसा एव अशरीरिणी वाक् उदचरत्[१५],

"भरस्व पुत्रं दुष्यन्त मावमंस्थाः शकुन्तलाम्" इति।

तत् श्रुत्वा दुष्यन्तः ससुतां शकुन्तलां सानन्दं स्वीचकार। तं पुत्रं च नामतः भरतं कृत्वा युवराज-पदे अभ्यषेचयत्। सोऽयं शाकुन्तलेयः भरतः तरुणे वयसि सार्वभौमः चक्रवर्ती सम्राट् बभूव।

१. पक्षियोंने-- पक्ष्यांनीं। २. वधूवरोंके परस्पर सम्मतिसे विवाह-- वधूवरांच्या परस्पर संमतीनें विवाह। ३. रहा-- राहिला। ४. समुद्र-मर्यादित। ५. पूर्ण। ६. जन्म दिया-- जन्म दिला। ७. दमन करता था— दमन करीत असे। ८. पड़ा--पडलें। ९. भेजा-- पाठविलें। १०. करार। ११. वज्र। १२. काष्ठ--लांकूड। १३. मूर्च्छित। १४. स्वीकार किया-- स्वीकार केला। १५. बोली-- बोलली।

---

## तृतीयः पाठः

# भीष्म-जन्म-कथा

भरतवंशे प्रतीप-नामा परम-धार्मिकः राजा बभूव। तस्य पुत्रः शान्तनुः नाम आसीत्। स शान्तनुः कदाचित् गंगा-तीरे विहरन् कुमारिका-रूपिणीं गंगा-देवीं ददर्श। तस्याः अदृष्ट-पूर्वं सौन्दर्यं लावण्यं च दृष्ट्वा विमोहितः शान्तनुः, "त्वं मम भार्या भव" इति प्रार्थयामास। सा तत्प्रार्थनाम् अङ्गीकृत्य[१] तं न्यवेदयत् "यावत्काल-पर्यन्तं त्वं मया सह स्नेहेन वर्तिष्यसे कठोर-भाषणं न करिष्यसि तावत्काल-पर्यन्तम् अहं त्वया सह निवत्स्यामि। अन्यथा त्वां सहसा परित्यज्य निर्गमिष्यामि।" तस्याः निदेशम्[२] अंगीकृत्य

शान्तनुः ताम् उपयेमे। एवं सुखेन कालं यापयतोः[३] तयोः पुत्रः सञ्जातः। जातमात्रः एव स पुत्रः राज्ञ्या गंगा-प्रवाहे प्रक्षिप्तः। तदनन्तरं द्वितीयः पुत्रः सञ्जातः। सः अपि तया गंगा-प्रवाहे प्रक्षिप्तः। एतद् दृष्ट्वा विषण्ण-मनाः अपि शान्तनुः तस्यै न चुकोप। तदनन्तरं तृतीयः, चतुर्थः, पञ्चमः, षष्ठः, सप्तमः च पुत्रः गंगा-प्रवाहे प्रक्षिप्तः। स्वभार्यायाः अनेन घोरेण कर्मणा स शान्तनुः भृशं व्याकुलः बभूव। तदनन्तरम् अष्टमः पुत्रः सञ्जातः। तम् अपि गंगा-प्रवाहे प्रक्षेप्तुं सा उद्यता बभूव। तदा पुत्र-स्नेहेन व्याकुलः स शान्तनुः सक्रोधं ताम् उवाच, "अयि पुत्र-घातिनि! क्रूरे! किमर्थम् एवं स्वपुत्रान् मारयसि? मा, एनम् अष्टमं पुत्रं मा जहि।"

शान्तनोः तत् सक्रोधं वचनं श्रुत्वा सा राज्ञी उवाच, "अहम् एनं पुत्रं न मारयामि। परं मया सह सकोपं भाषणं कृत्वा त्वया विवाह-समये कृतः समयः[४] उल्लङ्घितः। अतः अधुना त्वां परित्यज्य अहं गमिष्यामि। अहं मानुष-रूपेण अवतीर्णा साक्षात् गंगा अस्मि। मयि प्रसूताः एते अष्टौ पुत्राः मुनि-शाप-प्रभावेण भुवम् अवतीर्णाः अष्टौ वसवः सन्ति। तेषु सप्त वसवः मया देह-बन्धनात् मोचिताः। अयम् अष्टमः पुत्रः द्यु-नामा वसुः अस्ति।" अयम् एव देवरातः इति नाम्ना ख्यातिं गतः। देवरातं गृहीत्वा गंगा अन्तर्दधौ।[५] कालान्तरेण सकल-संस्कार-सम्पन्नः स देवरातः गंगा-देव्या शान्तनवे समर्पितः। स एव भीष्मः इति ख्यातः।

१. स्वीकार कर-- स्वीकार करून। २. आज्ञा। ३. बितानेवाला-- घालविणारा। ४. करार। ५. अदृश्य हुई-- अदृश्य झाली।

---

## चतुर्थः पाठः

# भीष्म-प्रतिज्ञा

शान्तनोः गंगा-सम्भवः पुत्रः देवरातः स्वस्य लोकोत्तरेण चारित्र्येण भीष्म इति नाम्ना प्रसिद्धिं प्राप। महाभारत-ग्रन्थे अयं देवरातः सर्वत्र भीष्म इति नाम्ना उल्लिखितः।

अथ एकदा देवरातस्य पिता शान्तनुः यमुना-तीरे सञ्चरन् कुतश्चित् दिव्यं गन्धम् आजिघ्रत् । तन्मूलं[१] ज्ञातुकामः सः इतस्ततः विलोकयन् काम् अपि मनोज्ञ[२]-रूपिणीं तरुणीं ददर्श। तस्याः नाम सत्यवती इति आसीत्। सत्यवत्याः अलौकिकेन गन्धेन रूपेण च विमोहित-हृदयः स राजा, "त्वं मम भार्या भव" इति तां प्रार्थयामास। "यदि मम पिता मां तुभ्यं दास्यति तर्हि एव आवयोः विवाहः भविष्यति" इति सा तरुणी प्राह। तदनुसारं विवाहार्थम् तस्याः पितुः अनुमतिं प्राप्तुं स राजा सचिवेन समं तस्याः गृहं गतः। सत्यवत्याः पिता कश्चित् धीवरः आसीत्। राज्ञः अभिप्रायं ज्ञात्वा स धीवरः प्राह, "नाहं स्वकन्यां पुत्रवते तुभ्यं दास्यामि। राज्ञः प्रथमः पुत्रः राज्यं प्राप्नुयात्। सत्यवत्याः पुत्राः यदि राज्याधिकारं प्राप्नुयुः तर्हि एव अहं स्वकन्यां भूपालाय दास्यामि।" धीवरस्य तत् वचनं श्रुत्वा उद्विग्नः राजा स्वभवनं प्रत्यागतः।

सततं सत्यवती-चिन्तनेन स राजा अल्पेन एव कालेन कृशाङ्गः हताशः इव अदृश्यत। स्वपितुः इमां शरीरावस्थां दृष्ट्वा देवव्रतः सचिवं तत्कारणं पप्रच्छ। तदा सचिवेन भूतपूर्वः सर्वः वृत्तान्तः देवव्रताय निवेदितः। स्व-पितृ-खेदस्य तत् कारणं ज्ञात्वा पितृ-भक्तः स देवव्रतः दाशं[३] प्रति जगाम। तस्य अभिप्रायं श्रुत्वा भीष्मः तं दाशम् उवाच, "हे दाशराज, सत्यवती-पुत्रः एव अस्माकं राजा भविष्यति। तत्पश्चात् अपि तद्वंशजाः एव राज्यं प्राप्नुयुः। अद्यप्रभृति अहं यावज्जीवं ब्रह्मचर्य-व्रतं पालयिष्यामि।" देवरातस्य तां भीष्मां[४] प्रतिज्ञां श्रुत्वा देवैः आकाशतः पुष्प-वृष्टिः कृता। अनया भीष्म-प्रतिज्ञया देवव्रतः "भीष्म" इति नाम्ना सर्वत्र भू-मण्डले ख्यातिं लेभे।

१. उगम। २. सुन्दर। ३. ढीमर--कोळी। ४. भयंकर।

---

पञ्चमः पाठः

# बाल-लीला

पाण्डुराजस्य पञ्च पुत्राः धर्म-भीमार्जुन-नकुल-सहदेव-नामधेयाः आसन्। धृतराष्ट्रस्य च दुर्योधन-दुःशासन-विकर्ण-चित्रसेनादयः शतं पुत्राः आसन्। एते सर्वे राज-कुमाराः बाल्ये वयसि एकत्र एव अवर्धन्त। धार्तराष्ट्राणां पाण्डवानां च सहक्रीडाम् अवलोक्य भीष्मादयः गुरुजनाः अत्यानन्दिताः बभूवुः। एतेषु पञ्चाधिक-शत-कुमारेषु वायु-पुत्रः भीमसेनः बलाधिकतया सर्वान् धार्तराष्ट्रान् सदैव पराजयते स्म। अथ एकदा वृक्षारूढेषु धार्तराष्ट्रेषु भीमसेनः तं महावृक्षम् आमूलात् कम्पयामास। तेन वृक्ष-शाखा-स्थिताः सर्वे धार्तराष्ट्राः फलवत् भूमौ निपेतुः। भीमसेनस्य एतादृशम् अद्भुतं बलं दृष्ट्वा दुर्योधनस्य पापबुद्धिः अजायत। तस्य विनाशोपायं स सर्वदा अचिन्तयत्।

अथ कदाचित् ते सर्वे राजपुत्राः जल-विहारार्थं गंगा-तीरं गताः। गंगातीरस्थे रम्योद्याने दीर्घकालं विहार-सुखं तैः सर्वैः अनुभूतम्। अनन्तरं भोजनावसरे कपट-मतिना दुर्योधनेन भीमसेनस्य अन्ने प्राणहरं विषं प्रक्षिप्तम्।

दुर्योधनस्य कपटम् अजानता भीमसेनेन तद् विष-मिश्रितम् अन्नं भक्षितम्। अल्पेन एव कालेन विष-बाधया भीमसेनः मूर्च्छितः। तदा निश्चेष्टं मृतकल्पं[१] भीमं लतापाशैः आबध्य[२] दुर्योधनः स्वयं तं गंगा-प्रवाहे प्राक्षिपत्।

क्रीडावसाने ते सर्वे राजकुमाराः भीमसेनः पूर्वम् एव एकाकी निर्गतः इति मत्वा राजधानीं प्रत्यागताः। राज-प्रासादम् आगत्य धर्मराजः मातरं कुन्तीम् अपृच्छत्, "अम्ब! किं भीमसेनः एकाकी एव राजधानीं प्रत्यागतः?"

धर्मराजस्य तं प्रश्नं श्रुत्वा, भीमः अनागतः इति च ज्ञात्वा सहसा व्याकुला सा कुन्ती "हा हा पुत्र! मां परित्यज्य क्व निर्गतः? देहि मे दर्शनम्" इति भृशं चक्रन्द[३]।

अथ गंगाप्रवाह-निमग्नं भीमसेनं जलचारिणः महाविषाः भुजंगमाः अदशन्। सर्प-विषेण भीमसेनस्य शरीरं निर्विषम् अभवत्। तदा ते सर्पाः भीमसेनं सर्पराजं वासुकिं प्रति नीतवन्तः। वासुकिः तम् अद्भुतम् अमृतम् अपाययत्[४]। तत्प्रभावेण च भीमसेनस्य सामर्थ्य भृशम् अवर्धत! अनन्तरं वासुकेः अनुज्ञां गृहीत्वा भीमसेनः स्वसदनम् आगत्य सर्वं वृत्तान्तम् अकथयत्।

१. मरा-सा—मेल्यासारखा। २. बांधकर—बांधून। ३. रोओ—रडली। ४. पिलाया—पाजलें।

---

षष्ठः पाठः

## लाक्षागृह-दाहः

पाण्डवानाम् उत्कर्षं दृष्ट्वा धृतराष्ट्रः भृशं चिन्ताकुलः अभवत्। ततः एकदा राज-नीतिज्ञं कणिक-नामानं मन्त्रिणम् आहूय धृतराष्ट्रः तम् अब्रवीत्—"हे कणिक, पाण्डवानां समुत्कर्षं दृष्ट्वा मम मनसि असूया जायते। तैः सह कथं वर्तितव्यं तत् त्वं मे निश्चितं ब्रूहि। अहं तव वचनं करिष्ये।"

तदा कणिकः प्राह—"हे राजन् यत् त्वाम् अहम् इदानीं निवेदयामि, तदनुसारं त्वं पाण्डवैः सह वर्तसे चेत्, अवश्यं तव चिन्ता दूरीभविष्यति"।

कणिकस्य अयम् उपदेशः कणिकनीतिः इति सर्वत्र प्रसिद्धः। शत्रुमित्र-विवेकं सम्यक् कृत्वा एनां कणिकनीतिम् अनुसृत्य यः शत्रुणा समं व्यवहरति, सः अवश्यं यशः प्राप्नोति।

नित्यमुद्यत-दण्डः स्यात् नित्यं विवृत-पौरुषः[१]।
अच्छिद्रश्छिद्रदर्शी स्यात् परेषां विवरानुगः ॥१॥
वधमेव प्रशंसन्ति शत्रूणामपकारिणाम्।
नावज्ञेयो रिपुस्तात दुर्बलोऽपि कथंचन ॥२॥
वहेदमित्रं स्कन्धेन यावत् कालस्य पर्ययः।
ततः प्रत्यागते काले भिन्द्याद् घटमिवाश्मनि ॥३॥

भयेन भेदयेद् भीरुं शूरमञ्जलिकर्मणा ।
लुब्धमर्थ-प्रदानेन समं न्यूनं तथौजसा ॥४॥
प्रहरिष्यन् प्रियं ब्रूयात् प्रहरन्नपि भारत ।
प्रहृत्य च कृपायीत शोचेत च रुदेत च ॥५॥
न विश्वसेदविश्वस्ते विश्वस्ते नातिविश्वसेत् ।
विश्वासाद् भयमुत्पन्नं मूलान्यपि निकृन्तति[२] ॥६॥
योऽरिणा सह सन्धाय शयीत कृत-कृत्यवत् ।
स वृक्षाग्रे यथा सुप्तः पतितः प्रतिबुध्यते ॥७॥
नाच्छित्वा पर-मर्माणि नाकृत्वा कर्म दारुणम् ।
नाहत्वा मत्स्यघातीव प्राप्नोति महतीं श्रियम् ॥८॥
भीतवत् संविधातव्यं यावद् भयमनागतम् ।
आगतं तु भयं दृष्ट्वा प्रहर्तव्यमभीतवत् ॥९॥
तालवत् कुरुते मूलं बालः शत्रुरुपेक्षितः ।
गहनेऽग्निरिवोत्सृष्टः क्षिप्रं संजायते महान् ॥१०॥
पाण्डवेषु यथान्यायमन्येषु च कुरूद्वह ।
वर्तमानो[३] न मज्जेस्त्वं तथा कृत्यं समाचर ॥११॥

एतादृशीं कणिकनीतिम् अनुसृत्य धृतराष्ट्र-दुर्योधन-दुःशासन-कर्ण-प्रभृतिभिः कुन्ती-सहितान् पाण्डवान् दग्धुं निश्चयः कृतः । तदर्थं तैः वारणावत-नगरे लाक्षा-गृहं कारितम् । तस्मिन् लाक्षागृहे कुन्ती-देव्या सह पाण्डवाः संवत्सरं न्यवसन् ।

एकदा रात्रौ काचित् निषादी[४] पञ्चपुत्रा तस्मिन् लाक्षागृहे निवासार्थम् आगता । संवत्सर-निवासेन पाण्डवान् विश्वस्तान् ज्ञात्वा दुर्योधनाज्ञया पुरोचन-नामा कश्चित् म्लेच्छः तत् जतु[५]-गृहं ददाह ।

"दुर्योधनः युष्मान् सर्वान् जतुगृहे दग्धुम् इच्छति अतः सावधानाः वसत" इति विदुरेण प्रबोधिताः[६] पाण्डवाः तत्र जतुगृहे भूमिगतं गूढ-मार्गं कारयामासुः । दह्यमानं लाक्षागृहम् अवलोक्य भीमः स्वबांधवान् मातरं च पृष्ठे स्कन्धयोः कट्योः[७] च आरोप्य गूढमार्गेण वनान्तरं निर्जगाम ।

अन्येद्युः प्रातः तत्र षट् कलेवराणि दग्धानि अवलोक्य सर्वे वारणावत-वासिनः दुःखिताः कौरवाः च प्रमुदिताः बभूवुः ।

१. प्रकट पराक्रमवाला--प्रगट पराक्रमी। २. काटता है--कापतें। ३. बर्ताव करता हुआ--वागणूक ठेवीत असतां । ४. भिल्ल स्त्री । ५. लाख । ६. सजग किये हुए-- पूर्व सूचना देऊन हुशार केलेले । ७. कमरपर— कमरेवर

---

## सप्तमः पाठः

# द्रौपदी-स्वयंवरः

लाक्षागृह-दाहानन्तरं पाण्डवाः ब्राह्मण-वेषेण वनात् वनं परिभ्रम्य द्रुपद-रक्षित दक्षिण-पाञ्चाल-देशम् उपागताः । तत्र कुम्भकारस्य शालायां ते न्यवसन्। अस्मिन् अवसरे द्रुपद-राजः स्वकन्यायाः द्रौपद्याः स्वयंवरम् अघोषयत्। स्वकन्याम् अर्जुनाय एव दास्यामि इति द्रुपदस्य मनोगतः निश्चयः आसीत् । पाण्डवानाम् अन्वेषणार्थं तेन महान् प्रयत्नः कृतः । अन्ततः एकं दृढम् अनानम्य[१]-धनुः वैहायस[२]-यन्त्रं च स द्रुपदः कारयामास। "इदं धनुः सज्यं कृत्वा पञ्चभिः बाणैः यन्त्रम् अतीत्य यः मत्स्यवेधं करिष्यति स एव धनुर्धरः मम कन्यां स्वयंवरे प्राप्नुयात्" इति द्रुपदेन उद्घोषितम् । दुर्योधन-कर्ण-शल्य-प्रमुखाः अनेके राजानः स्वयंवर-दिदृक्षवः महर्षयः अन्ये च बहवः धनुर्विद्या-विशारदाः सर्वतः सुशोभिते स्वयंवर-मण्डपे सम्मिलिताः । तदनन्तरं रुचिराङ्गी, सुवसना, सर्वाभरण-भूषिता,पतिंवरा द्रौपदी समलङ्कृतां काञ्चनीं मालां समुपादाय रंगं प्रविवेश । ततः पुरोहितः विधिवत् वह्निं हुत्वा स्वस्तिवाचनम्[३] अकरोत् । द्रौपदी-भ्राता धृष्टद्युम्नः तूर्य[४]ध्वनिं निवार्य मेघ-गंभीरया वाचा उच्चैः जगाद,

"इदं धनुर्लक्ष्यम्[५]इमे च बाणाः शृण्वन्तु मे भूपतयः समेताः ।
छिद्रेण यन्त्रस्य समर्पयध्वं शरैः शितैर्व्योमचरैर्दशार्धैः ॥
एतन्महत्कर्म करोति यो वै कुलेन रूपेण बलेन युक्तः ।
तस्याद्य भार्या भगिनी ममेयं कृष्णा भवित्री न मृषा ब्रवीमि ॥"

इमां घोषणाम् आकर्ण्य बहुभिः राज-पुत्रैः द्रौपदी-प्राप्त्यर्थं प्रयत्नः कृतः। परं तेषां सर्वेषां प्रयत्नाः निष्फलाः बभूवुः। अनन्तरं धनुर्धराणां प्रवरः[६] कर्णः लक्ष्य-वेधार्थम् आगतः। उद्यत-धनुषं नियुक्त-बाणं तम् अवलोक्य, "नाहं सूतं वरयामि" इति वाक्यं द्रौपदी उच्चैः जगाद। तस्याः तत् वाक्यं श्रुत्वा कर्णः सामर्षं सहासं च सूर्यम् अवलोक्य तद् धनुः तत्याज। एवं सर्वान् क्षत्रियान् हत-प्रभावान् दृष्ट्वा ब्राह्मण-समाजतः ब्राह्मण-वेषधारी अर्जुनः उत्थितः। स धनुः प्रदक्षिणं[७] परिक्रम्य, भगवन्तं शंकरं शिरसा प्रणम्य, श्रीकृष्णं च मनसा संस्मृत्य निमिषान्तरेण पञ्चभिः बाणैः तत् लक्ष्यं विव्याध। तदा अन्तरिक्षे समाजमध्ये च सहसा महान् निनादः बभूव। आकाशस्थिताः देवाः अर्जुनस्य शिरसि दिव्यानि पुष्पाणि अवर्षन्। इन्द्र-सदृशम् अर्जुनस्य रूपम् अवलोक्य प्रमुदिता द्रौपदी तत्कण्ठे वरमालां समर्पयामास।

तदा स्वयंवरार्थम् आगताः सर्वे राजानः अत्यन्तं कुपिताः। भीमार्जुनाभ्यां समं तैः युद्धम् आरब्धम्। परम् उभाभ्यां भ्रातृभ्यां ते सर्वे राजानः पराजिताः। तयोः पराक्रमं दृष्ट्वा श्रीकृष्णः, ता कुन्ती-सुतौ भीमार्जुनौ स्तः इति विशंक्य सर्वान् भूपालान् निवारयामास।

अथ याज्ञसेनीं[९] गृहीत्वा परमप्रीतौ भीमार्जुनौ कुटी-द्वारम् आगत्य "भिक्षा आनीता" इति मातरं निवेदितवन्तौ। तदा ताम् अनवेक्ष्य एव कुटीगता कुन्ती, 'समेत्य सर्वे भिक्षां भुङ्क्त' इति प्रोवाच। अनन्तरं राजा द्रुपदः तत्र आगत्य 'के भवन्तः' इति युधिष्ठिरं पप्रच्छ। तदा युधिष्ठिरः प्राह,

"वयं हि क्षत्रिया राजन् पाण्डोः पुत्रा महात्मनः।
ज्येष्ठं मां विद्धि कौन्तेयं भीमसेनार्जुनाविमौ॥
व्येतु ते मानसं दुःखं क्षत्रियाः स्मो नरर्षभ।
पद्मिनीव सुतेयं ते ह्रदादन्य-ह्रदं गता॥"

एवं तत्परिचयं ज्ञात्वा परमप्रीतेन द्रुपदेन कुन्ती-वचनानुसारं पञ्चभिः पाण्डुपुत्रैः समं यथाविभवं[१०] स्वकन्यायाः विवाहः यथाविधि कारितः।

१. नमानेको कठिन—नमविण्यास कठिण। २. आकाशस्थ। ३. मंगलकार्यारंभविधि। ४. तुरही—तुतारी। ५. निशान—निशाण। ६. श्रेष्ठ। ७. धनुषको दाहिने ओर रख—धनुष्य उजवीकडेस राखून। ९. द्रौपदीको—द्रौपदीस। १०. ठाटबाटसे—थाटामाटानें।

अष्टमः पाठः

# सुभद्राहरणम्

पाण्डवैः स्वयंवरे द्रौपदी समधिगता इति वृत्तान्तं चरेभ्यः[1] ज्ञात्वा दुर्योधन-प्रमुखाः सर्वे कुरवः विषण्णाः[2] अभवन्। धृतराष्ट्राज्ञया विदुरः कुन्ती-द्रौपदी-सहितान् पाण्डवान् आनयत्। धृतराष्ट्रस्य आदेशतः अर्धं राज्यं सम्प्राप्य ते पाण्डवाः इन्द्रप्रस्थाख्ये नवनिर्मिते सुरम्ये नगरे निवासार्थं निर्गताः। तत्र ते अन्योन्यवशम् आगताः अपि नारदादेशतः मिथः समयं चक्रिरे यत्,

"द्रौपद्या नः सहासीनानन्योन्यं योऽभिदर्शयेत्।
स नो द्वादश वर्षाणि ब्रह्मचारीवने वसेत्॥" इति।

अथ एकदा चौरैः कस्यचित् ब्राह्मणस्य गावः अपहृताः। तद्विमोचनार्थं स्वीयं धनुः आदातुं अर्जुनः शस्त्रागारं सहसैव प्राविशत्। तत्र च द्रौपद्या सह आसीनं धर्मराजं स ददर्श।

अस्य समय-भङ्गस्य प्रायश्चित्तार्थं अर्जुनः द्वादश वर्षाणि तीर्थयात्रां कर्तुम् एकाकी एव प्रतस्थे। तीर्थयात्रार्थं तापसवेषेण परिभ्रमन् स पार्थः प्रभास-तीर्थम् समागतः। तत्र द्वारकाधीशः श्रीकृष्णः अर्जुनं स्वमन्दिरम् आनाययत्। अर्जुनः बहूनि दिनानि कृष्णस्य प्रासादे सुखेन उवास।

अथ कदाचित् द्वारका-समीप-वर्तिनि रैवतक-पर्वते यादवानां महोत्सवः आसीत्। श्रीकृष्णेन सह अर्जुनः अपि महोत्सवार्थं जगाम। तत्र परिभ्रमता अर्जुनेन काचन रूप-सौंदर्य-शालिनी विविधालंकार-मण्डिता बाला विलोकिता। तस्याः अप्रतिम-लावण्येन तापस-वेष-धारिणः धनंजयस्य मनः विचलितम् इव।

अर्जुनस्य मनोगतं भावं ज्ञात्वा इंगितज्ञः हृषीकेशः तं प्रहसन् इव अब्रवीत्। "वनेचरस्य[3] किमिदं कामेनालोड्यते[4] मनः।" "इयं खलु म[म] कनीयसी भगिनी सुभद्रा" तत् आकर्ण्य कौन्तेयः सहसा प्राह

"दुहिता वसुदेवस्य वासुदेवस्य च स्वसा।
रूपेण चैषा सम्पन्ना कमिवैषा न मोहयेत्॥"

तदा श्रीकृष्णः उवाच इमां च सुभद्रां मम ज्यायान्[5] भ्राता स्वशिष्याय दुर्योधनाय दातुम् इच्छति। अतः त्वं यदि एनां कामयसे तर्हि,

"प्रसह्य[६] हरणं चापि क्षत्रियाणं प्रशस्यते।"

इति ज्ञात्वा एनाम् अपहर।

एवं सुभद्रा-बन्धोः अनुमतिं प्राप्य सुभद्राहरणं कर्तुम् अवसरं प्रतीक्षते स्म।

अथ कदाचित् सुभद्रा पूजार्थं रैवतक गिरिं प्रति प्रस्थिता इति ज्ञात्वा मृगया-व्यपदेशेन[७] अर्जुनः अपि तत्रैव प्रस्थितः। गिरेः प्रदक्षिणं कृत्वा सखिभिः सह द्वारकां प्रति समागच्छन्तीं सुभद्रां दृष्ट्वा अर्जुनः ताम् अभिद्रुत्य[८] प्रसह्य रथम् आरोपयत्। सुभद्राहरणवृत्तान्तं श्रुत्वा सर्वे वृष्णि-वीराः तम् कुलकन्यापहारिणम् आक्रमितुम् उद्यताः। तदा श्रीकृष्णः तान् उवाच, "समराङ्गणे अर्जुनं जेतुं पिनाक[९]-पाणिं शंकरं विना न कोऽपि प्रभवति[१०]। सुभद्राहरणं कृत्वा अर्जुनेन अस्मत्कुलस्य अवमानः न कृतः अपि तु सम्मानः एव कृतः इति अहं मन्ये।"

तदनन्तरं श्रीकृष्णादेशतः सुभद्रा-सहितः अर्जुनः द्वारकां प्रत्यागतः तत्र तयोः विवाह-मङ्गलोत्सवं श्रीकृष्णः अकारयत्। अर्जुनः अपि तत्रैव सुखेन कालं निनाय। द्वादशे वर्षे समाप्ते अर्जुनः सुभद्रया समम् इन्द्रप्रस्थम् प्रत्यागतः। धर्मराजं प्रणम्य ब्राह्मणान् अभ्यर्च्य सः द्रौपदीं द्रष्टुम् आगतः। तदा सा साभ्र्यं तम् उवाच—

"तत्रैव गच्छ कौन्तेय यत्र सा सत्वतात्मजा[१०]।"
सुबद्धस्यापि भारस्य पूर्वबन्धः श्लथायते॥"

इत्येवम् अर्जुनं निर्भर्त्सयन्तीं द्रौपदीं द्रष्टुं गोपालिका-वेशधारिणी तस्याः नवसपत्नी सुभद्रा तत्रैव आगता। सा च त्वरितम् उपगम्य द्रौपदीं सादरं प्रणनाम। द्रौपदी अपि पूर्वोत्थिताम् असूयां विस्मृत्य तां श्रीकृष्णभगिनीं प्रेम्णा प्रत्युत्थाप्य परिष्वज्य च "निःसपत्नोऽस्तु ते पतिः" इति शुभाशिष ददौ।

१. गुप्त हेर। २. खिन्न। ३. अरण्यवासी। ४. क्षुब्ध किया जाना–क्षुब्ध केला जाणें। ५. जेठा–वडील। ६. बलात्कारसे–बलात्कारानें। ७. बहानेसे–मिषानें। ८. आक्रमण करके–आक्रमण करून। ९. शिव-धनु। १०. समर्थ होना–समर्थ होणें। ११. वसुदेवकी पुत्री–वसुदेवाची मुलगी।

———

संस्कृत–भाषा–प्रचारि–सभायाः

# मौखिक–संस्कृत–परीक्षाः

संस्कृत-भाषाप्रचारि-सभायाः निम्न-लिखित-मौखिक-परीक्षाः प्रतिवर्षं भविष्यन्ति। एताः सर्वाः परीक्षाः मौखिक्यः एव वर्तन्ते। परीक्षाः प्रतिवर्षं द्विवारं खिरस्ताब्दस्य प्रथमे मासि अष्टमे मासि च (एवं हेमन्ततौं वर्षतौं च) भविष्यन्ति। द्वयोःपरीक्षयोः मध्ये भवेत् षण्मासानाम् अन्तरम्। नागपुर-स्थाः नागपुरात् बहिःस्थाः च परीक्षार्थिनःबालक-बालिकाःच परीक्षार्हाः भवेयुः। परीक्षा-शुल्कं प्रतिछात्रं चतुराणकं केवलम्। यदि दशसंख्याधिकाः परीक्षार्थिनः आवेदन-पत्रं सर्वकार-मान्य-विद्यालयस्य मुख्याध्यापकद्वारा प्रेषयिष्यन्ति तर्हि परीक्षा-केन्द्रस्य आयोजनं मुख्याध्यापक–महाभागस्य सहकार्येण कर्तुं शक्यते। आवेदन–पत्राणि परीक्षाशुल्केन सह परीक्षा–मासस्य मासपूर्वं प्रेषणीयानि। आवेदन-पत्रे परीक्षार्थिनः नाम, पितुः नाम, कुल-नाम, वयः, पाठशालां, निवास-स्थानं, केन्द्र-नाम च लिखन्तु। परीक्षोत्तीर्णच्छात्रेभ्यः प्रमाण-पत्राणि प्रदीयन्ते यथासमयम्। श्रेणिगुणानां प्रतिशतता अधोलिखिता भवेत्—

| | |
|---|---|
| प्रथम–श्रेणिः | ८०–१०० |
| द्वितीय–श्रेणिः | ६०–७९ |
| तृतीय–श्रेणिः | ४०–५९ |
| प्रावीण्यम् | ९०–१०० |

एतासां परीक्षाणां नामानि अभ्यासक्रमः पुस्तक-नामानि च अधः लिख्यन्ते। अभ्यास-क्रमान्तर्गतानां द्वादश-पाठ्य-पुस्तकानां मूल्यम् आणक-द्वयं प्रत्येकम्।

## प्रथम–परीक्षा–

१. बालामृत-शतश्लोकी*
२. सुलभ-शब्द-रूपावलिः*
३. व्यवहार-प्रश्नोत्तरी*

## द्वितीय–परीक्षा–

४. उपयुक्त-धातुरूपावलिः*
५. हितोपदेश-कथाः*
६. संक्षिप्तामरकोशः*
प्रथम-परीक्षायाः अभ्यासक्रमः च।

## तृतीय–परीक्षा–

७. छात्रामृत-शतश्लोकी*
८. रामायण-कथा*
९. व्यवहार-सूक्तावलिः*
द्वितीय-परीक्षायाः अभ्यासक्रमः च।

## संस्कृत–प्रवेश–परीक्षा–

१०. महाभारत-कथाः*
११. नाट्य-प्रवेशः
१२. कौमुदी-प्रवेशः
तृतीय-परीक्षायाः अभ्यासक्रमः च।

*मुद्रिताः
**धर्मपीठम्,**
**नागपुरम् १**

**स. ना. कुलकर्णी**
सं. भा. प्र. सभायाः
प्रमुख-कार्यवाहः




इयं पुस्तिका वर्धानगरस्थ-राष्ट्रभाषा-प्रचार-समितेः मुद्रणालये मुद्रिता नागपुरस्थ-संस्कृतभाषाप्रचारि-सभाद्वारा प्रमुख-कार्यवाहेन धर्मपीठे कुलकर्णी-भवने प्रकाशतां च नीता।

संस्कृत-भाषा-प्रचार-वाङ्मयमाला

# नाट्य–प्रवेशः

( छात्राणां कृते )

( हिन्दी-मराठी-संस्करणम् )



श्रीमताम् अग्रवाल-कुलावतंसानां
रा. सा. गोपीकिसन-महोदयानां
दानानुग्रहफलम् इदम् ।



संकलयिता— प्रा. श्री. भा. वर्णेकरः





एकादशं पुष्पम् ]  १९५५  [ मूल्यम् आणक-द्वयम्

# हृद्गतम् ।

नाटकं ननु नयनं प्रीणयति, श्रवणं तर्पयति, हृदयं च समुल्लसयति । नाटकस्य अभिनयनं, प्रेक्षणं, श्रवणं, पठनं वा कस्य न प्रियम् बालकस्य, यूनः उत वृद्धस्य ? बालकानां विद्यते सहजा अभिनयन-प्रवृत्तिः । तस्यै प्रसरं प्रदाय संवर्धनीया खलु एषा सर्वत्र, विशेषतः बाल-विकास-विशेष-संस्थासु । सा बालानाम् उपकारिणी न भवति इति तु न । वक्तृत्वम् अभिनय-रहितम् अपूर्णम् एव । तत् न तथा प्रभावशालि यथा अभिनय-युतम् । तत् बाल-शिक्षणम् अपूर्णम् मन्तव्यम् यत्र अस्याः स्वाभाविक्याः प्रवृत्तेः विकसनार्थं न कः अपि प्रयत्नः क्रियते न वा कः अपि अवसरः दीयते । विविध-विद्यालयेषु विद्यालयात् बहिः वा मया पञ्चाशदधिक-नाटकानि छात्र-द्वारा नाटितानि । प्रति नाटकं छात्राणाम् उत्साहः अदम्यः दृष्टः । तैः न केवलं नाटकाभिनयार्थं प्रयतितम् प्रत्युत नाटकोपकरणार्थम् अपि । रंग-भूमेः आयोजनं, पटीनां वर्णनं, नेपथ्य-निर्माणम्, वेष-भूषा-संकलनं, प्रेक्षा-गृह-विरचनं, प्रेक्षकासन-नियन्त्रणम् इत्यादि-नाना-विधानि कार्याणि निरलसतया, सोत्साहं, सानन्दम्, सायासं, आत्मसुखम् अविगणय्य अहोरात्रं प्रजागृत्य तैः कृतानि इति मे स्वकः अनुभवः । केषु केषु विद्यालयेषु अस्मिन् विषये छात्रेभ्यः प्रोत्साहनं दीयते । तत्तद्विद्यालय-प्रधानाध्यापकाः अभिनन्दनार्हाः खलु । छात्राणां नैसर्गिकीं प्रवृत्तिं, नाटक-प्रवणतां च मनसि कृत्वा ते विद्यालयीय-कार्यक्रमाणाम् आयोजनं कुर्वन्ति, राष्ट्रोपयोगि-गुणानां विकासार्थं च प्रयतन्ते ।

परं वर्तते भृशं दुर्भिक्षं यथोचितानां स्वतन्त्रतया छात्राणां कृते विरचितानां संस्कृत-नाटकानाम् । यावत् छात्रानुरूपाणां नाटकानां समुचितः प्रबन्धः न भवति तावत् पूर्वेषां प्रथितयशस्कानां कवि-वर्याणां नाटकेभ्यः आकृष्टानां कतिपयेषां हृद्य-प्रवेशानाम् एव नाटनं साधु भवेत् । संस्कृत-नाटके अस्माकम् आर्य-संस्कृतिः प्रतिबिम्बिता अस्ति । तस्याः आदर्शस्य पुरःस्थापनस्य विद्यते अद्य पुनर् विलुप्त-प्राय-संस्कृति-काले महती आवश्यकता न केवलं बालानाम् अपि तु वयोवृद्धानां ननु । अस्यां लघु-पुस्तिकायां श्रीमद्भिः सरस-हृदयैः श्री. भा. वर्णेकर-महोदयैः केषांचित् अनतिदीर्घाणां नानारसाढ्यानां नाट्य-प्रवेशानां निपुणं संकलनं कृतम् । एतेषां नाटनं छात्राणाम् अभिनय-चातुरीं विवर्धयेत्, भाषा-प्रागल्भ्यं सम्पादयेत्, प्रेक्षक-मनांसि रञ्जयेत्, भारतीय-संस्कृति-प्रसारं च समम् एव साधयेत् ।

विद्यन्ते अभिनयोत्सुकाः छात्राः, विद्यन्ते अभिनयोचिताः नाट्य-प्रवेशाः, विद्यन्ते प्रेक्षणोत्सुकाः च प्रेक्षकाः, परं यदि न विद्यन्ते सहृदयाः विद्यालय-प्रधानाध्यापकाः तर्हि सर्वे एते सन्तः अपि भावाः न सन्ति एव ।

अतः विद्यालय-संचालकानां प्रति विद्यते एषा सप्रश्रया प्रार्थना यत् तैः इमे चारु-नाट्यप्रवेशान् स्वे स्वे विद्यालये प्रतिवर्षं नाटयित्वा संस्कृतस्य संस्कृतेः च प्रचारं समर्थ्ये सभायै सहकार्यं देयम् इति ।

धर्मपीठम्, नागपुरम् १
वर्ष-प्रतिपदा शके १८७७
दिनाङ्कः २४-३-५५

स. ना. कुलकर्णी
प्रमुख-कार्यवाहः
संस्कृत-भाषा-प्रचारिणी सभा,
नागपुरम् ।

# १. शर्विलकः

(शूद्रक-विरचित-मृच्छकटिकतः)

( एकाकिनः भाषणम् )

धिक्कष्टम् । प्रमाणसूत्रं मे विस्मृतम् । (विचिन्त्य) आम् इदं यज्ञोपवीतं प्रमाणसूत्रं भविष्यति । यज्ञोपवीतं हि नाम ब्राह्मणस्य महद् उपकरण-द्रव्यं विशेषतः अस्मद्विधस्य । कुतः

एतेन मापयति भित्तिषु कर्ममार्गम्
एतेन मोचयति भूषणसंप्रयोगान् ।
उद्घाटको भवति यंत्रदृढे कपाटे
दष्टस्य कीटभुजगैः परिवेष्टनं च ॥

मापयित्वा कर्म समारभे। (तथा कृत्वा अवलोक्य) एकलोष्टावशेषः अयं संधिः[१] । धिक् कष्टम् ! अहिना दष्टः अस्मि । (यज्ञोपवीतेन अंगुलिं बद्ध्वा विषवेगं नाटयति) चिकित्सां कृत्वा स्वस्थोऽस्मि (पुनः कर्म कृत्वा दृष्ट्वा च) अये ज्वलति प्रदीपः । तथा हि ।

शिखा प्रदीपस्य सुवर्ण-पिंजरा[२] मही-तले सन्धि-मुखेन निर्गता ।
विभाति पर्यन्ततमःसमावृता सुवर्ण-रेखेव कषे निवेशिता ।

(पुनः कर्म कृत्वा) समाप्तः अयं संधिः । भवतु प्रविशामि । अथवा न तावत् प्रविशामि । प्रतिपुरुषं प्रवेशयामि ।(तथा कृत्वा) अये न कश्चित्[४]! नमः कार्तिकेयाय ! (प्रविश्य दृष्ट्वा च) अये पुरुषद्वयं सुप्तम्। भवतु आत्मरक्षार्थं द्वारम् उद्घाटयामि । कथं जीर्णत्वाद् गृहस्य विरौति[३] कपाटः ? तद् यावत् सलिलम् अन्वेषयामि । क्व नु खलु सलिलं भविष्यति ? (इतस्ततो दृष्ट्वा सलिलं गृहीत्वा क्षिपन् सशंकम्) मा तावद् भूमौ पतत्शब्दम् उत्पादयेत् । भवतु एवं तावत् (पृष्ठेन प्रतीक्ष्य कपाटम् उद्घाट्य) भवतु एवं तावद् इदानीं परीक्षे किं लक्ष्यसुप्तम्[५] उत परमार्थ सुप्तम्[६] इदं द्वयम् । (त्रासयित्वा परीक्ष्य च ) अये परमार्थसुप्तेन अनेन भवितव्यम् । तथा हि ।

निःश्वासोऽस्य न शंकितः सुविशदस्तुल्यान्तरं वर्तते
दृष्टिर्गाढ-निमीलिता न विकला नाभ्यन्तरे चंचला ।
गात्रं स्रस्त[७]-शरीर-संधि-शिथिलं शय्या-प्रमाणाधिकं
दीपं चापि न मर्षयेद[८]भिमुखं स्याल्लक्ष्य-सुप्तं यदि ॥

(समंतादवलोक्य) अये कथं मृदंगः ? अयं दर्दुरः[९] । अयं पणवः[१०] ।

इदम् ? अथवा भवनप्रत्ययात् प्रविष्टः अस्मि ? तत् परमार्थ-द्ररिद्रः अयम् उत राज-भयात् चौर-भयाद् वा भूमिष्ठं द्रव्यं धारयति ? तत् ममापि शर्विलकस्य भूमिष्ठं द्रव्यम् भवतु। बीजं प्रक्षिपामि। (तथा कृत्वा)। निक्षिप्तं बीजं न क्वचित् स्फारीभवति। अये परमार्थ-दरिद्रः अयम्। भवतु। गच्छामि।

शब्दार्थाः—१. भगदाड—भगदाड, २. पिंवळी—पीली, ३. करकर आवाज करते—चूं चूं करता है, ४. कवाड—किवाड़, ५. झोंपेचें ढोंग—नीन्दका बहाना, ६. खरी झोंप—सच्ची नीन्द, ७. गळलेलें—गला हुआ, ८. सहन करील—सहन करेगा, ९. वाद्य-विशेष, १०. ढोल.

---

## २. दुष्यन्तस्य अङ्गुलीयकम्।

(अभिज्ञान-शाकुन्तलतः)

(ततः प्रविशति नागरिकः श्यालः[1] पश्चात् बद्धपुरुषम् आदाय रक्षिणौ च)

रक्षिणौ—(ताडयित्वा) अरे कुम्भीरक[2]! कथय कुत्र तु एतत् मणिबन्धनोत्कीर्णनामधेयं राजकीयम् अंगुलीयकं[3] समासादितम्[4] ?

पुरुषः—(भीतिनाटितकेन) प्रसीदन्तु भावमिश्राः[5]। अहं न ईदृशकर्मकारी।

प्रथमः—किं शोभनः ब्राह्मणः इति कलयित्वा[6] राज्ञा प्रतिग्रहः[7] दत्तः ?

पुरुषः—शृणुत इदानीम्। अहं शक्रावतारा[8]भ्यन्तरवासी धीवरः।

द्वितीयः—पाटच्चर[9]! किम् अस्माभिः जातिः पृष्टा ?

श्यालः—सूचक[10]! कथयतु सर्वम् अनुक्रमेण। मा एनम् अन्तरे[11] प्रतिबन्धय[12]।

उभौ—यद् आवुत्तः[13] आज्ञापयति। कथय।

पुरुषः—अहं जालोद्गालादिभिः[14] मत्स्यबन्धनोपायैः[15] कुटुम्ब-भरणं करोमि।

श्यालः—विशुद्ध इदानीम् आजीवः[16]।

पुरुषः—स्वाभाविकं कर्म विनिन्दितम् अपि न गर्हणीयं भवति। पशु-मारण-कर्म-दारुणः अपि श्रोत्रियः अनुकम्पामृदुः एव।

पुरुषः—एकस्मिन् दिवसे खण्डशः रोहितमत्स्यः मया कल्पितः[१७] यावत् तस्य उदराभ्यन्ते इदं रत्नभासुरम्[१८] अंगुलीयं दृष्ट्वा पश्चाद् अहं तस्य विक्रयाय दर्शयन् गृहीतः भावमिश्रैः । मारयत वा मुञ्चत वा । अयम् अस्य आगम-वृत्तान्तः ।

श्यालः—जानुक ! विस्रगन्धिः[१९] गोधादी[२०] मत्स्यबन्धः[२१] एव निःसंशयम् । अंगुलीयक-दर्शनम् अस्य विमर्शयितव्यम् । राजकुलम् एव गच्छामः ।

रक्षिणौ–तथा । गच्छ अरे गण्डभेदक[२२]! (सर्वे परिक्रामन्ति)।

श्यालः—सूचक ! इमं गोपुरद्वारे[२३] अप्रमत्तौ प्रतिपालयतं यावद् इदम् अङ्गुलीयकं यथागमनं भर्तुः निवेद्य ततः शासनं प्रतीक्ष्य निष्क्रामामि ।

उभौ–प्रविशतु आवुत्तः स्वामिप्रसादाय । (इति निष्क्रान्तः श्यालः)।

प्रथमः—जानुक ! चिरायते खलु आवुत्तः ।

द्वितीयः—ननु अवसरोपसर्पणीयाः राजानः ।

प्रथमः—जानुक ! प्रस्फुरतः मम हस्तौ अस्य वधार्थं सुमनसः[२४] पिनद्धुम्[२५] ।

पुरुषः—नार्हति भावः[२६] अकारण-मारणं भावयितुम्[२७] ।

द्वितीयः—( विलोक्य ) एष नः स्वामी पत्रहस्तः राजशासनं प्रतीक्ष्य इतोमुखो दृश्यते । गृध्रबलिः भविष्यसि शुनः मुखं वा द्रक्ष्यसि ।

श्यालः—सूचक ! मुच्यताम् एष जालोपजीवी । उपपन्नः[२८] खलु अङ्गुलीयकस्य आगमः ।

सूचकः—यथा आवुत्तः भणति ।

द्वितीयः—एष यमसदनं प्रविश्य प्रतिनिवृत्तः । ( इति पुरुषं परिमुक्तबंधनं करोति ) ।

पुरुषः—( श्यालं प्रणम्य ) भर्तः ! अथ कीदृशः मम आजीवः ?

श्यालः—एष भर्त्रा अङ्गुलीयक-मूल्य-सम्मितः प्रसादः अपि (दापितः) ( इति पुरुषाय स्वयं प्रयच्छति ) ।

पुरुषः—( सप्रमाणं प्रतिगृह्य ) भर्तः ! अनुगृहीतः अस्मि ।

सूचकः—एष नाम अनुग्रहः यत् शूलाद् अवतार्य हस्तिस्कन्धे

जानुकः—आवुत्त ! परितोषं कथयति। तेन अंगुलीयकेन भर्तुः संमतेन भवितव्यम् ।

श्यालः—न तस्मिन् महार्हं रत्नं भर्तुः बहुमतम् इति तर्कयामि । तस्य दर्शनेन भर्तुः अभिमतः जनः स्मारितः । मुहूर्तं प्रकृति-गम्भीरः अपर्युत्सुक-नयनः आसीत् ।

सूचकः—सेवितं नाम आवुत्तेन ।

जानुकः—ननु भण–'अस्य कृते मात्स्यिकभर्तुः' इति ।

पुरुषः—भट्टारक[२९] ! इतः अर्धं युष्माकं सुमनोमूल्यं भवतु ।

जानुकः—एतावद् युज्यते ।

श्यालः—धीवर । महत्तरः त्वं प्रियवयस्यः इदानीं मे संवृत्तः । कादम्बरी-[३०]साक्षिकम् अस्माकं प्रथमसौहृदम् इष्यते । तत् शौण्डिकापणम्[३१] एव गच्छामः । (इति निष्क्रान्ताः सर्वे । )

शब्दार्थाः—१. बायकोचा भाऊ—साला, २. चोर, ३. आंगठी—अँगूठी, ४. मिळविलें--मिलाया, ५. महाराज (आदर दर्शक), ६. समजून--मान कर, ७. दान, ८. शक्रतीर्थ, ९. चोर, १०. दूत, ११. मध्यें--बीचमें, १२. अडविणें--रोकना, १३. बहिणीचा नवरा—बहनोई, १४. जाळें, गळ अित्यादींनीं--जाल आदिसे, १५. मासे मारी--मछली पकड़ना, १६. निर्वाहाचें साधन--निर्वाहका साधन, १७. कापला--काटा, १८. तेजस्वी, १९. कच्च्या मांसाचा वास असलेला--कच्चा मासका गंधवाला, २०. मगर खाणारा--मगर खानेवाला, २१. ढींवर--धीमर, २२. मासे कापणारा--मछलीमार, २३. वेशीच्या दरवाज्यावर--पुरद्वारपर, २४. फुलें--फूल, २५. घालण्यास—पहिनाने के लिए, २६. महाराज (आदर द्योतक), २७. तर्क करणें—तर्क करना, २८. सिद्ध झाला—सिद्ध हुआ, २९. महाराज (आदर द्योतक), ३०. कदंबाच्या फुलांची दारू—कदंबके पुष्पोंकी दारू ३१. दारूचें दुकान—दारूकी दुकान.

---

## ३. कर्णस्य अस्त्रप्राप्तिः

(कर्णशल्य-संवादः)

( भासकवेः कर्णभार-नाटकतः )

कर्णः—शल्यराज ! यत्र असौ अर्जुनः तत्रैव चोद्यतां[१] मम रथः

शल्यः—बाढम् ( चोदयति )

कर्णः—भोः कष्टम् ।

पूर्वं कुन्त्यां समुत्पन्नो राधेय इति विश्रुतः ।
युधिष्ठिरादयस्ते मे यवीयांसस्तु पाण्डवाः ॥

भो शल्यराज ! श्रूयतां मम अस्त्रस्य वृत्तान्तः ।

शल्यः—ममापि अस्ति कौतूहलम् एनं वृत्तान्तं श्रोतुम् ।

कर्णः—पूर्वमेव अहं जामदग्न्यस्य सकाशं गतवान् अस्मि ।

शल्यः—ततस्ततः

कर्णः—ततः

विद्युल्लता-कपिल[2]-तुङ्ग[3]-जटा-कलापम्[4]
उद्यत्प्रभा-वलयिनं परशुं दधानम् ।
क्षत्रान्तकं मुनिवरं भृगु-वंशकेतुं
गत्वा प्रणम्य निकटे निभृतः स्थितोऽस्मि ॥

ततस्तेन जामदग्न्येन मम आशीर्वचनं दत्वा पृष्टः अस्मि ।

को भवान् किमर्थम् इह आगतः इति ।

शल्यः—ततस्ततः ?

कर्णः—भगवन् ! अखिलानि अस्त्राणि उपशिक्षितुम् इच्छामि इति उक्तवान् अस्मि । ततः उक्तोऽहं भगवता, "ब्राह्मणेषु उपदेशं करिष्यामि, न क्षत्रियाणाम् इति ।"

शल्यः—अस्ति खलु भगवतः क्षत्रियवंश्यैः पूर्ववैरम् । ततस्ततः ?

कर्णः—ततो नाहं क्षत्रियः इति अस्त्रोपदेशं ग्रहीतुम् आरब्धं मया । ततः कतिपय-दिवसातिक्रमे[5] कदाचित् फलमूलसमित्कुश-कुसुमाहरणाय भगवता गुरुणा सह अनुगतः अस्मि । ततः स गुरुः वन-भ्रमण-परिश्रमात् मदङ्के निद्रावशम् उपगतः ।

शल्यः—ततस्ततः ?

कर्णः—ततः

कृत्ते वज्रमुखेन नाम कृमिणा दैवान्ममोरुद्वयं
निद्राच्छेद-भयादसह्यत गुरोर्धैर्यात्तदा वेदना ।
उत्थाय क्षतजाप्लुतः[6] स सहसा रोषानलोद्दीपितः
बुध्वा मां च शशाप काल-विफलान्यस्त्राणि ते सन्त्विति ॥

शल्यः—अहो कष्टम् अभिहितं तत्रभवता !

कर्णः—परीक्षामहे तावदस्त्रस्य वृतान्तम् । (तथा कृत्वा) एतानि अस्त्राणि निर्वीर्याणि इव लक्ष्यन्ते । अपि च ।

इमे हि दैन्येन निमीलितेक्षणा
मुहुः स्खलन्तो विवशास्तुरङ्गमाः ।
गजाश्च सप्तच्छद-दान-गन्धिना[10]
निवेदयन्तीव रणे निवर्तनम् ॥

शङ्ख-दुन्दुभयश्च निःशब्दाः ।

शल्यः—भोः कष्टं खलु इदम् ।

कर्णः— शल्यराज ! अलम् अलं विषादेन ।

हतोऽपि लभते स्वर्गं जित्वा तु लभते यशः ।
उभे बहुमते लोके नास्ति निष्फलता रणे ॥

अक्षयोऽस्तु गोब्राह्मणानाम् । अक्षयोऽस्तु पतिव्रतानाम् । अक्षयोऽस्तु रणेषु अपराङ्मुखानां यौध-पुरुषाणाम् । अक्षयोऽस्तु मम प्राप्तकालस्य । एष भोः प्रसन्नोऽस्मि ।

समर-मुखमसह्यं पाण्डवानां प्रविश्य
प्रथित-गुण-गणाढ्यं धर्मराजं च बद्ध्वा ।
मम शर-वर-वेगैरर्जुनं पातयित्वा
वनमिव हत-सिंहं सुप्रवेशं करोमि ॥

शल्यराज ! यावद् रथमारोहावः ।

शल्यः-- बाढम् ( उभौ रथारोहणं नाटयतः )

शब्दार्थाः—१. हाकलला जावा—ले चला जाय, २. पिंगट—फीका-पीला, ३. उंच—ऊँचा, ४. समूह, ५. धारण करणारा—धारण करनेवाला, ६. श्रेष्ठ, ७. स्तब्ध, ८ कांहीं दिवस लोटल्यावर—कुछ दिन बीतने बाद, ९. रक्तपूर्ण, १०. सातविणीच्या वासाप्रमाणें (उग्र) असणाऱ्या गज-मदाच्या वासानें—सप्तपर्णीके (उग्र) गंध होनेवाले गज-मदके गंधसे ।

---

## ४. द्रोणवधः

(भट्टनारायणस्य वेणीसंहारतः)

(ततः प्रविशति आकृष्टखड्गः कलकलमाकर्णयन् अश्वत्थामा)

अश्वत्थामा—कुतोऽयं प्रचण्ड-घन-गर्जितानुकारी श्रवण-भैरवः रवः[1] श्रूयते ?

कुतोऽद्य समरोदधेः अयम् अपूर्वः पूरः ?

(विचिन्त्य) ध्रुवं गाण्डीविना सात्यकिना वृकोदरेण वा यौवनदर्पाद्

आत्म-प्रभाव-सदृशम् आचेष्टते । (पृष्ठतः विलोक्य) तत् कः अत्र ? रथम् उपनयतु । अथवा अलम् इदानीं मम रथ-प्रतीक्षया । सशस्त्रः एव अस्मि सजल-जलधर-प्रभा-भासुरेण अमुना खड्गेन । यावत् समर-भुवम् अवतरामि । (परिक्रम्य वामाक्षि-स्पंदनं सूचयित्वा) अये, मम अपि नाम अश्वत्थाम्नः समर-महोत्सव-प्रमोद-निर्भरस्य तात-विक्रम-दर्शन-लालसस्य अनिमित्तानि समर-गमन-विघ्नम् उत्पादयन्ति ! भवतु । गच्छामि । (सावष्टम्भं[2] परिक्रम्य अग्रतः विलोक्य) । कथम् क्षात्रधर्मात् अवधीर्य लज्जां च परित्यज्य इमे गज-तुरंग-चारिणः वीराः रणभूमेः पलायन्ते ? तेषामेव अपक्रामतां बलानाम् अयं महान् नादः । (निरूप्य) हा हा धिक् ! कष्टम् ! कथम् एते महारथाः कर्णादयः अपि समरात् पराङ्मुखाः भवन्ति ? कथं नु ताताधिष्ठितानाम् अपि बलानाम् इयम् अवस्था भवेत् ? भवतु । संस्तम्भयामि[3] भो भोः कौरवसेना-परिपालकाः नरपतयः ! कृतं[4] कृतम् अमुना समर-परित्याग-साहसेन ।

यदि समरमपास्य नास्ति मृत्यो--
र्भयमिति युक्तमितोऽन्यतः प्रयातुम् ।
अथ मरणमवश्यमेव जन्तोः
किमिति मुधा[5] मलिनं यशः कुरुध्वे ।।

अपि च । सर्वधन्वीश्वराणां गुरुः रिपु-बल-सागर-वडवानलः मे तातः सेनानायकः । कर्ण ! अलं सम्भ्रमेण । कृप ! व्रज समरम् । कृतवर्मन् ! मुञ्च शङ्काम् । ताते चाप-द्वितीये रण-धुरं वहति, कः खलु भयस्य अवकाशः ?

(नेपथ्ये)—कुतः अद्यापि ते तातः ?

अश्वत्थामा—(श्रुत्वा) किं ब्रूथ ? 'कुतः अद्यापि ते तातः ?' इति । (सरोषम्) आः क्षुद्राः समर-भीरवः ! कथम् एवं प्रलपतां वः सहस्रधा न दीर्णम्[6] अनया जिह्वया ?

दग्धुं विश्वं दहनकिरणैर्नोदिता द्वादशार्का
वाता वाता दिशि दिशि न वा सप्तधा सप्त भिन्ना ।
छन्नं मेघैर्न गगनतलं पुष्करावर्तकाद्यैः
पापं पापाः कथयत कथं शौर्यराशेः पितुर्मे ? ।।

(प्रविश्य संभ्रान्तः[7] सप्रहारः[8])

सूतः—परित्रायतां, परित्रायतां, कुमार ! (इति पादयोः पतति)

अश्वत्थामा—(विलोक्य) अये, कथं तातस्य सारथिः अश्वसेनः ?

सूतः—(सकरुणम्) कुतः अद्यापि ते तातः ?

अश्वत्थामा—(सावेगम्) किं तातः नाम अस्तम् उपगतः ?

सूतः—अथ किम् !

अश्वत्थामा—हा तात ! (इति मोहम् उपगतः)

सूतः—कुमार ! समाश्वसिहि[९] समाश्वसिहि !

अश्वत्थामा—(लब्धसंज्ञः[१०] सास्रम्[११]) हा तात ! हा सुतवत्सल ! हा लोकत्रयैक-धनुर्धर !! हा जामदग्न्यास्त्र-सर्वस्व-प्रतिग्रह-प्रणयिन् ! क्व असि ? प्रयच्छ मे प्रतिवचनम् ।

सूतः—कुमार ! अलम् अत्यन्त-शोकावेगेन। वीर-पुरुषोचितां विपत्तिम् उपगते पितरि त्वम् अपि तद् अनुरूपेण एव वीर्येण शोकसागरम् उत्तीर्य सुखी भव।

अश्वत्थामा—(अश्रूणि विमुच्य) आर्य ! कथय कथय कथं तादृग्-भुज-वीर्य-सागरः तातः अपि नाम अस्तम् उपगतः ?

किं भीमाद् गुरु-दक्षिणां गुरु-गदां भीम-प्रियः प्राप्तवान् ?

सूतः—शान्तं पापम्।

अश्वत्थामा—अन्तेवासि-दयालुरुज्झितनयेनासादितो जिष्णुना ?।

सूतः—कथम् एवं भविष्यति ?।

अश्वत्थामा—गोविन्देन सुदर्शनस्य निशितं[१२] धारापथं प्रापितः ?।

सूतः—एतत् अपि नास्ति।

अश्वत्थामा—शङ्के नापदमन्यतः खलु गुरोरेभ्यश्चतुर्थादहम् ॥

सूतः—कुमार !

एतेऽपि तस्य कुपितस्य महास्त्र-पाणेः
किं धूर्जटेरिव तुलामुपयान्ति संख्ये[१३]? ।
शोकोपरुद्ध-हृदयेन यदा तु शस्त्रं
त्यक्तं तदाऽस्य विहितं रिपुणाऽतिघोरम् ॥

अश्वत्थामा—किं पुनः कारणं शोकस्य अस्त्र-परित्यागस्य वा ?

सूतः—ननु कुमारः एव कारणम्।

अश्वत्थामा—कथम् अहम् एव नाम ?

सूतः—श्रूयताम्। (अश्रूणि विमुच्य) अश्वत्थामा हतः इति प्रथमं स्पष्टम् उक्त्वा सत्यवादिना धर्मराजेण तदनन्तरं गजः इति शब्दः उच्चारितः।

तच्छ्रुत्वाऽसौ दयित-तनयः प्रत्ययात्तस्य राज्ञः
शस्त्राण्याजौ[१४] नयन-सलिलं चापि तुल्यं मुमोच ॥

अश्वत्थामा—हा शौर्यराशे ! हा शिष्यप्रिय ! हा युधिष्ठिरपक्षपातिन् ! (इति रोदिति ।)

सूतः—कुमार ! अलम् अत्यन्त-विलापेन। (ततः प्रविशति कृपः।)

(सोद्वेगं निःश्वस्य) तत् कथं नु खलु वत्सम् अद्य द्रक्ष्यामि अश्वत्थामानम् ! अथवा हिमवत्-सार-गुरु-चेतसि ज्ञात-लोक-स्थितौ तस्मिन् खलु शोकावेगम् अहम् आशङ्के। किं तु पितुः परिभवम्[15] असदृशम् उपश्रुत्य[16] न जाने किं व्यवस्यति इति ।

(विलोक्य) तदयं वत्सः तिष्ठति । यावद् उपसर्पामि । (उपसृत्य) (ससंभ्रमम्) वत्स ! समाश्वसिहि समाश्वसिहि ।

अश्वत्थामा—(संज्ञां लब्ध्वा सास्रम्) हा तात ! हा सकल-भुवनैक-गुरो ! (आकाशे) युधिष्ठिर ! युधिष्ठिर !

आजन्मनो न वितथं[17] भवता किलोक्तं
न द्वेक्षि यज्जन-मतस्त्वमजात-शत्रुः ।
ताते गुरौ द्विजवरे मम भाग्य-दोषात्
सर्वं तदेकपद एव कथं निरस्तम् ?॥

सूतः—कुमार ! एष ते मातुलः शारद्वतः पार्श्वे तिष्ठति ।

अश्वत्थामा—(पार्श्वं विलोक्य । सबाष्पम्) मातुल ! येन सह अद्य त्वं रणभूमिं गतः,यः सर्वेषां शूराणां रण-मद-दमन-क्षमः आसीत्,स ते आवुत्तः क्व नु खलु गतः ?

कृपः—सर्वं जानाति एव भवान् । तदलम् अत्यन्त-शोकावेगेन ।

अश्वत्थामा—मातुल ! परित्यक्तम् एव मया परिदेवितम्[18] । एषोऽहं सुतवत्सलं तातम् एव अनुगच्छामि ।

कृपः—वत्स ! अनुपपन्नम् ईदृशं व्यवसितं भवद्विधानाम् । यावद् अयं संसारः तावत् प्रसिद्धा एव इयं लोकयात्रा यत् पुत्रैः पितरः लोकद्वये अपि अनुवर्तनीयाः इति ।

अश्वत्थामा—आर्य ! सत्यम् एव इदम् । किंतु अति-दुर्वहत्वात् शोक-भारस्य न शक्नोमि तात-विरहितः क्षणम् अपि प्राणान् धारयितुम् । तद् गच्छामि तम् एव उद्देशं[19] यत्र तथाविधमपि पितरं द्रक्ष्यामि । (उत्तिष्ठन् खड्गम् आलोक्य विचिन्त्य ।) कृतम् अद्यापि शस्त्र-ग्रहण-विडम्बनया[20] ।

भगवन् शस्त्र ! यस्य प्रभावात् तव कोऽपि अविषयः न अभवत् तेन सुतशोकात् त्वं त्यक्तम् । अतः तस्य द्रोणस्य सुतः अहम् अपि त्वां परित्यजामि । स्वस्ति भवते भूयात् । (इति शस्त्रम् उत्सृजति ।)

( नेपथ्ये )

भो भो राजानः। कथम् इह भवन्तः सर्वे गुरोः भारद्वाजस्य परिभवम् अमुना नृशंसेन प्रयुक्तम् उपेक्षन्ते ।

अश्वत्थामा--(आकर्ण्य । शनैः शनैः शस्त्रं स्पृशन्) किं गुरोः भारद्वाजस्य परिभवः ?

पुनर्नेपथ्ये। त्रिभुवनगुरोः न्यस्तशस्त्रस्य द्रोणाचार्यस्य पलितधवले[21] मस्तके शस्त्राघातं कुर्वाणः अयं धृष्टद्युम्नः स्वशिबिरं प्रयाति। सहध्वं सहध्वम् !

(सक्रोधं सकम्पं च कृपसूतौ दृष्ट्वा) किं नाम इदम् ? धनुर्धारिणां राज्ञां समक्षं निःशस्त्रस्य मम तातस्य पलितधवले मस्तके शस्त्राघातः ?

कृपः—वत्स ! एवं किल जनः कथयति ।

अश्वत्थामा— किं तातस्य दुरात्मना परिमृष्टम्[22] अभूत् शिरः ?

सूतः— (सभयम्) कुमार ! आसीद् अयं तस्य तेजोराशेः देवस्य नवः परिभवावतारः ।

अश्वत्थामा—हा तात ! हा पुत्रप्रिय ! मम मन्दभागधेयस्य कृते शस्त्र-परित्यागात् तथाविधेन क्षुद्रेण आत्मा परिभावितः अथवा तातशिरसि कराघातं कुर्वता द्रुपदपुत्रेण ममैव शिरसि पादाघातः कृतः इत्यहं मन्ये ।

आः दुरात्मन् ! पाञ्चालापसद ! निःशस्त्रस्य तातस्य मस्तके यदा त्वया निःशंकं शस्त्राघातः कृतः तदा पाण्डुपाञ्चाल-सेना-संहार-समर्थः अयं धनुर्धारी अश्वत्थामा तव स्मृतिं किं नायातः ? युधिष्ठिर ! युधिष्ठिर ! अजातशत्रो ! अमिथ्यावादिन् ! धर्मपुत्र ? सानुजस्य ते किम् अनेन अपकृतम् ? अथवा किम् अनेन कुटिलमनसा ? अर्जुन ! सात्यके ! बाहुशालिन् वृकोदर ! माधव ! युक्तं नाम भवतां सुरासुर-मनुज-लोकैक-धनुर्धरस्य द्विजन्मनः परिणतवयसः[30] सर्वाचार्यस्य विशेषतः मम पितुः अमुना द्रुपदकुलकलङ्केन मनुज-पशुना स्पृश्यमानम् उत्तमाङ्गम्[31] उपेक्षितुम् ?

गुरुपातकं कृतं वा, यैः इद दृष्टं वा, यैः इदम् अनुमतं वा, तेषां कृष्णभीमार्जुन-सहितानां सर्वेषां रुधिरमांसैः करोमि अयम् अह दिशां बलिम्।

शब्दार्थाः—१. आवाज, २. धीरोदात्तपणें—धीरोदात्ततासे, ३. निरोध करतों—रोकूंगा, ४. पुरें—बस, ५. व्यर्थ, ६. भग्न, ७. भय-चकित, ८. मार लागलेला—मार लगा हुआ, ९. धीर धर—धीर धरो, १० शुद्धिवर आलेला—चेतना प्राप्त हुआ, ११. डोळ्यांत पाणी आणून—नेत्रोंमें आँसू लाकर, १२. तीक्ष्ण, १३. युद्धांत—युद्धमें, १४. रणभूमीवर—रणभूमिपर, १५. अपमान, १६. ऐकून—सुनकर, १७. असत्य, १८. विलाप करणें—विलाप करना, १९. प्रदेश, २०. सोंग—ढोंग, २१. पिकलेल्या केसांनीं पांढरें—पके बालोंसे सफेद, २२. प्रहार केलेले—प्रहार किया हुआ, २३. वृद्ध झालेल्याचे—वृद्धके.

---

## ५. राम-वासन्ती-संवादः

(भवभूति-विरचितस्य उत्तररामचरितस्य तृतीयांकतः)

वासन्ती—अहो सुदिवसः अद्य! अहो मे भाग्यम्। अद्य पुनरपि देवो रामचन्द्रः एतद् दण्डकारण्य दीर्घकालेन अलंकरोति। हे तरवः! ददत यूयं रामचन्द्राय अर्घ्यं मधुमयैः पुष्पैः फलैश्च। इमे वाताः अद्य प्रफुल्ल-कमल-गन्धमयाः वान्तु! हे विहंगमाः अद्य कुरुत अविरलं मधु-मधुरं कूजनम्। अहो अद्य देवो रामचन्द्रः एतद् वनम् आयातः।

रामः—एहि, सखि वासन्ति! ननु इतः स्थीयताम्।

वासन्ती—(उपविश्य। सास्रम्)। महाराज! अपि कुशल कुमार-लक्ष्मणस्य?

रामः—(अश्रुतिम् अभिनीय) स्वकरकमलेन जलं वितीर्य यान् वृक्षान् मैथिली अवर्धयत्, नीवारकणान् समर्प्य यान् विहंगमान् अपोषयत्, घासग्रासान् भोजयित्वा यान् हरिणान् लालितवती तेषां सर्वषाम् एकत्र दर्शनेन मम हृदये प्रस्तरोद्भेदयोग्यः द्रवः इव कोऽपि अननुभूतपूर्वः विकारः सम्प्रति जायते।

वासन्ती—महाराज! ननु पृच्छामि, "कुशलं कुमारलक्ष्मणस्य?"

रामः—(स्वगतम्)—अये 'महाराज' इति निष्प्रणयम् आमन्त्रण-पदम्'। सौमित्रिमात्रे च बाष्पस्खलिताक्षरः कुशलप्रश्नः। तथा मन्ये विदित-सीता-वृत्तान्ता इयम् इति। (प्रकाशम्) आं कुशल कुमारस्य।

(रोदिति)

वासन्ती—(रुदती) अयि देव ! किमिति दारुणः परं खलु असि ?

त्वं जीवितं त्वमसि मे हृदयं द्वितीयं
त्वं कौमुदी नयनयोरमृतं त्वमङ्गे ।
इत्यादिभिः प्रियशतैरनुरुध्य मुग्धां
तामेव शान्तमथवा किमिहोत्तरेण ।।

(मूर्च्छति)

रामः—सखि ! समाश्वसिहि, समाश्वसिहि ।

वासन्ती—(समाश्वस्य) तत् किम् इदम् अकार्यम् अनुष्ठितं देवेन ?

रामः—लोकः न मृष्यति[2] इति ।

वासन्ती—तत् कस्य हेतोः ?

रामः—स एव जानाति किमपि ।

वासन्ती—अयि कठोर ! यशः किल ते प्रियं
किमयशो ननु घोरमतः परम् ।
किमभवद्विपिने हरिणीदृशः[3]
कथय नाथ ! कथं बत मन्यसे ? ।।

रामः—सखि ! किम् अत्र मन्तव्यम् ?

हरिण-लोल-लोचनायाः परिस्फुरित-गर्भ-भरालसायाः[4] तस्याः कोमल-मृणाल-कल्पा ज्योत्स्नामयी इव अंगलतिका[5] क्रव्याद्भिः[6] व्याघ्रवृकादिभिः नियतं विलुप्ता स्यात् ।

सीता—आर्यपुत्र ! म्रियै[7] एषा म्रियै ।

रामः—हा प्रिये ! जानकि ! क्व असि ?

सीता—हा धिक् ! हा धिक् ! आर्यपुत्रः अपि मुक्तकण्ठं प्ररुदितः ।

तमसा—वत्से ! साम्प्रतिकम्[8] एव एतत् । कर्तव्यानि खलु दुःखितः दुःख-निर्वापणानि[9] । यतः

पूरोत्पीडे तटाकस्य परीवाहः प्रतिक्रिया ।
शोकक्षोभे च हृदयं प्रलापैरेव धार्यते ।।

विशेषतः रामभद्रस्य बहुतर-प्रकार-कष्टः जीवलोकः ।

इदं विश्वं पाल्यं विधिवदभियुक्तेन मनसा
प्रियाशोको जीवं कुसुममिव घर्मो ग्लपयति[10] ।
स्वयं कृत्वा त्यागं विलपन-विनोदोऽप्यसुलभ-
स्तदद्याप्युच्छ्वासो[11] भवति ननु लाभो हि रुदितम् ।।

ईदृगवस्थायां सः अद्यापि उच्छ्वसति एतदेव अस्माकं भाग्यं मन्ये।

रामः— हे भवन्तः पौरजानपदाः !

न खलु भवतां देव्याः स्थानं गृहेऽभिमतं तत–
स्तृणमिव वने शून्ये त्यक्ता न चाप्यनुशोचिता !
चिर-परिचितास्ते ते भावाः परिद्रवयन्ति माम्
इदमशरणैरद्यास्माभिः प्रसीदत रुद्यते ॥

तमसा— अतिगम्भीरम् अवगूरणं[12] शोकसागरस्य।

वासन्ती— देव ! अतिक्रान्ते धैर्यम् अवलम्ब्यताम्।

रामः— सखि किम् अत्र उच्यते धैर्यम् इति ?

देव्या शून्यस्य जगतो द्वादशः परिवत्सरः[13]।
प्रनष्टमिव नामापि न च रामो न जीवति ?॥

धैर्येणैव जीवति अयं जनः।

सीता—एतेन आर्यपुत्रस्य दुर्वार-[14]दारुणेन् दुःखसंक्षोभेण प्रस्फुरित-निजदुःखम् इव वेपते[15] मे हृदयम्।

वासन्ती—( स्वगतम् )–कष्टम् अभ्यापन्नः[16] देवः। तदा अन्यतः क्षिपामि[17] तावत्। (प्रकाशम्) चिरपरिचितान् इदानीं जनस्थानभागान् अवलोकयतु देवः।

रामः— एवम् अस्तु। (उत्थाय परिक्रामति।)

शब्दार्थाः—१. सम्बोधन, २ सहन करणें—सहन करना, ३. हरिणी सारखे नेत्र असणारीचें—हरिणी सदृश नेत्र वालीका, ४. हलत असलेल्या गर्भाच्या भारामुळें थकलेल्या—हिलते हुअे गर्भके भारसे श्रम पायी हुई के, ५. कोमल शरीर यष्टि, ६. कच्चें मांस खाणाऱ्या—कच्चा मास खानेवाले, ७. जीवन्त आहे—जिन्दी हूँ, ८. योग्य, ९. शमन, १०. म्लान करतो—म्लान करता है, ११. जगणें—जीना, १२. हल्ला—आक्रमण, १३. वर्षें—वर्ष, १४. अनिवार, १५. कंप पावते—कांप अुठता, १६. प्राप्त झाला—प्राप्त हुआ, १७. लक्ष्य नेतें—ध्यान ले जाती हूँ।

संस्कृत–भाषा–प्रचारि–सभायाः

# मौखिक-संस्कृत-परीक्षाः

संस्कृत-भाषाप्रचारि-सभायाः निम्न-लिखित-मौखिक-परीक्षाः प्रतिवर्षं भविष्यन्ति । एताः सर्वाः परीक्षाः मौखिक्यः एव वर्तन्ते । परीक्षा प्रतिवर्षं द्विवारं ख्रिस्ताब्दस्य प्रथमे मासि अष्टमे मासि च (एवं हेमन्ततौं वर्षर्तौ च) भविष्यन्ति । द्वयोःपरीक्षयोः मध्ये भवेत् षण्मासानाम् अन्तरम् । नागपुर-स्थाः नागपुरात् बहिःस्थाः च परीक्षार्थिनःबालक-बालिकाःच परीक्षार्हाः भवेयुः । परीक्षा-शुल्कं प्रतिच्छात्रं चतुराणकं केवलम् । यदि दशसंख्याधिकाः परीक्षार्थिनः आवेदन-पत्रं सर्वकार-मान्य-विद्यालयस्य मुख्याध्यापकद्वारा प्रेषयिष्यन्ति तर्हि परीक्षा-केन्द्रस्य आयोजनं मुख्याध्यापक–महाभागस्य सहकार्येण कर्तुं शक्यते । आवेदन-पत्राणि परीक्षाशुल्केन सह परीक्षा-मासस्य मासपूर्वं प्रेषणीयानि । आवेदन-पत्रे परीक्षार्थिनः नाम, पितुः नाम, कुल-नाम, वयः, पाठशाला, निवास-स्थानं,केन्द्र-नाम, पूर्वोत्तीर्णपरीक्षायाः परीक्षार्थ्यनुक्रमाङ्कं च लिखन्तु । परीक्षोत्तीर्णच्छात्रेभ्यः प्रमाण-पत्राणि प्रदीयन्ते यथासमयम् । श्रेणिगुणानां प्रतिशतता अधोलिखिता भवेत्—

| | |
|---|---|
| प्रथम–श्रेणिः | ८०–१०० |
| द्वितीय–श्रेणिः | ६०–७९ |
| तृतीय–श्रेणिः | ४०–५९ |
| प्रावीण्यम् | ९०–१०० |

एतासां परीक्षाणां नामानि पाठ्य-क्रमः पुस्तक-नामानि च अधः लिख्यन्ते । पाठ्यक्रमान्तर्गतानां द्वादश-पाठ्य-पुस्तिकानां मूल्यम् आणक-द्वयं प्रत्येकम् ।

**प्रथम–परीक्षा–**

१. बालामृत-शतश्लोकी
२. सुलभ-शब्द-रूपावलिः
३. व्यवहार-प्रश्नोत्तरी

**द्वितीय–परीक्षा–**

४. उपयुक्त-धातुरूपावलिः
५. हितोपदेश-कथाः
६. संक्षिप्तामरकोशः
प्रथम-परीक्षायाः पाठ्य-क्रमः च ।

**तृतीय–परीक्षा–**

७. छात्रामृत-शतश्लोकी
८. रामायण-कथा
९. व्यवहार-सूक्तावलिः
द्वितीय-परीक्षायाः पाठ्य-क्रमः च ।

**संस्कृत–प्रवेश–परीक्षा–**

१०. महाभारत-कथाः
११. नाट्य-प्रवेशः
१२. कौमुदी-प्रवेशः
तृतीय-परीक्षायाः पाठ्य-क्रमः च ।

**धर्मपीठम्**
**नागपुरम् १**

स. ना. कुलकर्णी
सं. भा. प्र. सभायाः
प्रमुख-कार्यवाहः



इयं पुस्तिका वर्धानगरस्थ-राष्ट्रभाषा-प्रचार-समितेः मुद्रणालये मुद्रिता नागपुरस्थ-संस्कृत-भाषा-प्रचारि-सभा-द्वारा प्रमुख-कार्यवाहेन धर्मपीठे कुलकर्णी-भवने प्रकाशतां च नीता ।

संस्कृत-भाषा-प्रचार-वाङ्मयमाला

# कौमुदी–प्रवेशः

(छात्राणां कृते)
( हिन्दी संस्करणम् )



श्रीमताम् मोहता-कुलावतंसानां
रा. सा. मथुरादासजी महोदयानां
दानानुग्रहफलम् इदम् ।



अनुवादकर्ता—ग. श्री. वारे शास्त्री एम्. ए. वेदान्ततीर्थः



[द्वादशं पुष्पम्] १९५६ [मूल्यम् आणक-द्वयम्]

# हृद्गतम्

परमं प्रमोदं प्राप्नोति अस्माकं चेतः संस्कृत-भाषा-प्रचार-वाङ्मय-मालायाः इदम् अन्तिमं द्वादशं पुष्पं संस्कृत-रसिक-कर-कमले समर्पयताम्। व्याकरणं नाम भाषा-तनोः अस्थि-पञ्जरम्। यथा पञ्जरं तनोः स्थैर्यं प्रापयति तथा एव व्याकरणं भाषायाः। व्याकरण-मुनिना पणिनिना कौमुदीं विरचय्य बहु उपकृतं संस्कृतं जगत्। अल्प-वर्णात्मके सूत्रे बह्वर्थं ग्रथयन् व्याकरण-नियमानाम् अध्ययनं कण्ठस्थीकरणं च सुलभीकृतवान् व्याकरण-महर्षिः पाणिनिः। चतुर्दशानां माहेश्वर-सूत्राणां शास्त्रीय-रचनायां यः बुद्धेः विलासः दरीदृश्यते तेन चकितम् अखिलं विश्वस्य वैय्याकरणं जगत्। एतादृश्या ग्रन्थ-सम्पदा कः नाम अधन्यः भारतीयः आत्मानं पितृ-पैतामहिक-रिक्थ-धरं साभिमानं न अभिनन्देत्।

एवंभूते पाणिनीय-व्याकरण-शास्त्रे अयं कौमुदी-प्रवेशः नाम अल्पः ग्रन्थः नवीनानाम् अध्येतॄणां सुखेन प्रवेशं कारयेत्। अस्मिन् पुस्तके संज्ञा-प्रकरणं, सन्धि-प्रकरणं, कारक-प्रकरणं, कृदन्त-प्रकरणं, तद्धित-प्रकरणं च केवलम् अन्तर्भूतम्। एतेषाम् अपि विषयाणां न सर्वाणि सूत्राणि संगृहीतानि, किन्तु सामान्यत्वेन येषाम् उपयोगः वारं वारं भवति ईदृशानां कतिपयानां बहूपयोगि-सूत्राणाम् अत्र संग्रहः कृतः विद्यते। कौमुद्यां प्रवेशाय एतानि प्रायः पर्याप्तानि भवेयुः।

सूत्रं, सूत्र-वृत्तिः, तस्याः अनुवादः च लिखितः। बालेभ्यः सूत्राणां सूत्रवृत्तीनां च कण्ठस्थीकरणस्य एव विद्यते अपेक्षा। विद्यालयीय-महाविद्यालयीयच्छात्राणां कृते अनुवादः अपि भृशम् उपकारकः भवेत्।

कौमुदी व्याघ्रमुखी इति उच्यते। कौमुद्यां यत् क्लिष्टत्वं विद्यते तत् अस्मिन् पुस्तके न वर्तते। कौमुद्याः पठनम् अपि आनन्द-जनकम् इति स्वानुभवेन एव छात्राः जानीयुः। अस्य पुस्तकस्य स्वल्पम् अपि अध्ययनं बहूपकारकं भवति, सिद्धं ज्ञानं प्रापयति, गुर्वर्थ-नियमान् स्मारयति, व्युत्पत्तिं प्रबोधयति, प्रयोग-शङ्कां छिनत्ति, क्लिष्टान् सन्धीन् विश्लेषयति, दुर्बोधान् अर्थान् विशदीकरोति, भाषा-दोषान् निराकरोति, शब्द-भाण्डारस्य च टङ्क-शालाम् एव करस्थीकरोति।

श्रीमतां ल. रा. कुलकर्णी-महाभागानां पठन-पाठनाभ्यासः गाढः। पठनस्य पाठनस्य च विषये यः समुचितः अनुभवः तैः महता कष्टेन अर्जितः सः अस्य पुस्तकस्य आयोजने तैः उपयोजितः। अतः एतत् पुस्तकम् अध्येतॄणाम् अध्यापकानां च सन्तोषाय भवेत् इति वयम् आशास्महे।

धर्मपीठम्, नागपुरम्
फाल्गुन-पूर्णिमा, शके १८७६
दिनाङ्कः ८-३-५५

स. ना. कुलकर्णी
प्रमुख-कार्यवाहः
संस्कृत-भाषा-प्रचारिणी सभा

# अथ संज्ञा-प्रकरणम् ।

अइउण् १ । ऋऌक् २ । एओङ् ३ । ऐऔच् ४ । हयवरट् ५ । लण् ६ । ञमङणनम् ७ । झभञ् ८ । घढधष् ९ । जबगडदश् १० । खफछठथचटतव् ११ । कपय् १२ । शषसर् १३ । हल् १४ । इति माहेश्वराणि सूत्राण्यणादिसंज्ञार्थानि । एषामन्त्या इतः । हकारादिष्वकार उच्चारणार्थः ।

१. **हलन्त्यम् ।** उपदेशे अन्त्यं हल्-इत् स्यात् ।

२. **अदर्शनं लोपः ।** प्रसक्तस्य अदर्शनं लोपसंज्ञं स्यात् ।

३. **तस्य लोपः ।** तस्य इतः लोपः स्यात् ।

४. **आदिरन्त्येन सहेता ।** अन्त्येन इता सहितः आदिः मध्यगानां स्वस्य च संज्ञा स्यात् । यथा–अण् इति अइउ-वर्णानां संज्ञा । एवम् अक् अच् हल् अल् इत्यादयः ।

५. **ऊकालोऽज्झ्रस्वदीर्घप्लुतः ।** उश्च ऊश्च ऊ३श्च वः । वां कालः इव कालः यस्य सः अच् क्रमात् ह्रस्वदीर्घ-प्लुतसंज्ञः स्यात् ।

ये १४ महेश्वरके सूत्रके नामसे प्रसिद्ध है । तांडव नृत्यके समय शंकरके डमरूसे उनकी उत्पत्ति हुई ऐसा आख्यायिका है । इन्हींको सूत्र अथवा उपदेश कहते हैं । पाणिनिनें इन्हीं उपदेशोंकी सहायतासे अण्, अक्, अच्, हल् आदि संज्ञाएं बनाई । अ आ, इ ई, उ ऊ ऐसे न कहते हुए इन वर्णोंके समूहको अण् यह संज्ञा है । अ से लेकर औ तकके वर्णोंको स्वर न कहते हुए पाणिनिने उन्हे अच् यह संज्ञा दी । सभी व्यञ्जनोंका उच्चार न करते हुए उन व्यञ्जनोंको हल् यह संज्ञा दी । इन सूत्रका उपदेश महेश्वरने किया ऐसा कहते है । इनका उपयोग अणादि (अण् आदि) संज्ञाए बनानेके लिये है । इन १४ उपदेशोंके अन्त्य वर्ण इत् संज्ञक है । (इ एति जाना, इत् याने व्याकरण-विषयक कार्य करके निकल जाना) हकारादिमे रहनेवाला अकार उच्चारकी सुविधाके लिये है । (बिना स्वरकी सहायता व्यंजनोंका उच्चार स्पष्ट रूपसे करना संभव नहीं ।)

१. उपरोक्त १४ उपदेशोंके अन्त्य वर्ण इत् संज्ञक है ।

२. विद्यमान वर्णका न दिखना इसकी लोप संज्ञा होती है । उदा. अ इ उ ण् इनमेंसे विद्यमान ण् का न दिखना याने ण् का लोप हुआ ऐसा कहते है ।

३. जिन वर्णोंकी इत् संज्ञा होती है उनका लोप करना चाहिये ।

४. अन्त्य इत् संज्ञकके साथ आदि वर्ण स्वयंका और बीचमें आनेवाले वर्णोंका संज्ञक होता है । उदा. अण् यह संज्ञा इ और उ तथा अ कारकी भी बोधक होती है । अण् कहनेसे अ इ उ इन वर्णोंका बोध होता है । वैसे ही अक् याने अ इ उ ऋ ऌ ये वर्ण, अच् यानें सभी स्वर, और हल् यानें सभी व्यञ्जन, और अल् याने सभी वर्ण समझना चाहिये ।

५. ह्रस्व उ, दीर्घ ऊ और प्लुत ऊ इनका बहुवचनका रूप वः (उः ऊः वः); (मुरगेके आवाजके सामान) इन तीन प्रकारके उच्चारण करनेके लिये जो समय लगता है उतना ही समय जिन स्वरोंके उच्चारणको लगता है उन स्वरोंको क्रमसे ह्रस्व, दीर्घ और प्लुत ये संज्ञाए होती है ।

६. **परः सन्निकर्षः संहिता ।** वर्णानाम्-अतिशयितः सन्निधिः संहितासंज्ञः स्यात् ।

७. **हलोऽनन्तराः संयोगः ।** अज्भिःअ-व्यवहिताः हलः संयोगसंज्ञाः स्युः ।

८. **सुप्तिङन्तं पदम् ।** सुबन्तं तिङन्तं च पदसंज्ञं स्यात् ।

६. वर्ण परस्पर अत्यंत निकट आते है तब उसे संहिता कहते है ।
७. दो व्यंजनोंके बीच जब स्वर नहीं रहता तब उसे संयोग कहते है ।
८. सुप् प्रत्ययान्त और तिङ प्रत्ययान्त शब्दोंकी पद संज्ञा होती है ।

(**सुप्-प्रत्ययाः**—स्वौजसमौट् इत्यादि । सु औ जस्,अम् औट् शस्, टा भ्याम् भिस्, ङे भ्याम् भ्यस्, ङसि भ्याम् भ्यस्, ङस् ओस् आम्, ङि ओस् सुप् ।

**तिङप्रत्ययाः**—तिप् तस् झि, सिप् थस् थ, मिप् वस् मस्, त आताम् झ, थास् आथाम् ध्वम्, इड् वहि महिङ ।)

---

# अच्-संधि-प्रकरणम् ।

९. **इको यणचि ।** इकः स्थाने यण् स्यात् अचि संहितायां विषये । इति + उवाच = इत्युवाच, नदी + अवतरणम् = नद्यवतरणम्,भानु + अस्तः= भान्वस्तः वधू + इच्छा = वध्विच्छा, पितृ + अंशः = पित्रंशः ।

१०. **एचोऽयवायावः ।** एचः क्रमात् अय् अव् आय् आव् एते स्युः अचि । विष्णवे, नायकः, पावकः, खगौ + उत्पतितौ = खगावुत्पतितौ ।

११. **अदेङ्गुणः ।** अत् एङ च गुणसंज्ञः स्यात् ।

१२. **तपरस्तत्कालस्य ।** तःपरः यस्मात् स च तात्परः च उच्चार्यमाण-समकालस्य एव संज्ञा स्यात् ।

१३. **आद्गुणः ।** अवर्णात् अचि परे पूर्वपरयोः एकः गुणादेशः स्यात् । उप + इन्द्रः = उपेन्द्रः, गङगा + उदकम् = गङगोदकम्, न + इह= नेह,सूर्यस्य + उदयः= सूर्यस्योदयः।

१४. **वृद्धिरादैच् ।** आत् ऐत् च वृद्धिसंज्ञः स्यात् ।

९. संधि करते समय आगे स्वर रहनेपर इक् प्रत्याहारके स्थानमें यण् प्रत्याहार आता है ।

१०. स्वर आगे रहनेपर एच् प्रत्याहारके स्थानमें क्रमसे अय् अव् आय् आव् ये आदेश (बदलेमें आनेवाले वर्ण) आते है ।

११. अत् और एङ इनको गुण कहते है । गुण–अ, (ह्रस्व) ए, ओ ।

१२. तकारके आगे आनेवाले और तकार जिनके आगे है ऐसे वर्ण स्वयंके सम-काल वर्णके ही संज्ञक होते है। उदा. अत् इसमें अकारके आगे त् है। अतः अत् याने ह्रस्व अकार ही लेना चाहिये (दीर्घ अथवा प्लुत नहीं); त् के आगे एङ याने ए और ओ है अतः दीर्घ ए और दीर्घ ओ ही लेना चाहिये (प्लुत नहीं) ।

१३. अवर्णके परे यदि स्वर हो तो पूर्व (अ-आ) तथा (पर) आगेका स्वर दोनोंके स्थानमें एक गुणादेश होता है । उ० उपेन्द्रः=उप+इन्द्रः=उप्+अ+इन्द्र=उप् एन्द्रः; गङ्गा+उदकम्=गङ्ग्+आ+उदकम्=गङ्ग्+ओ+दकम् ।

१४. आ, ऐ और औ इनको वृद्धि यह संज्ञा दी जाती है ।

१५. **वृद्धिरेचि।** आत् एचि परे वृद्धिः एकादेशः स्यात् । कृष्णैकत्वम्, गङ्गौघः, रामस्य + ऐश्वर्यम् = रामस्यैश्वर्यं, कर्ण + औदार्यम् = कर्णौदार्यम् ।

१६. **अकः सवर्णे दीर्घः** । अकः सवर्णे अचि परे पूर्वपरयोः दीर्घः एकादेशः स्यात् । दैत्यारिः, श्रीशः, विष्णूदयः, होतॄकारः ।

१७. **एङः पदान्तादति** । पदान्तात् एङः अति परे पूर्वरूपम् एकादेशः स्यात् । हरेऽव, विष्णोऽव, वनेऽत्र ।

१८. **ईदूदेद्द्विवचनं प्रगृह्यम्** । ईदूदेदन्तं द्विवचनं प्रगृह्यं स्यात् । हरी एतौ, विष्णू इमे । गङ्गे अमू ।

१९. **प्लुतप्रगृह्या अचि नित्यम्** । एते अचि प्रकृत्या स्युः ।

१५. अवर्णसे परे यदि ए, ओ, ऐ, औ (एच् प्रत्याहार) हो तो दोनो वर्णोंके स्थानमें एक वृद्धि आदेश होता है । उ० कृष्ण+एकत्वम्=कृष्ण्+अ+एकत्वम्=कृष्ण्+ऐकत्वम्=कृष्णैकत्वम्; गङ्गा+ओघः=गङ्ग्+आ+ओघः=गङ्ग्+औ+घः=गङ्गौघः ।

१६. अ इ उ ऋ ऌ (अक् प्रत्याहार) इन वर्णोंसे परे यदि उनके सवर्ण वर्ण (वही वर्ण ह्रस्व या दीर्घ) हो तो दोनोंके स्थानमें दीर्घ एकादेश होता है । उ० दैत्य+अरिः=दैत्य्+अ+अरिः=दैत्य्+आ+रिः=दैत्यारिः; श्री+ईशः=श्र्+ई+ई+शः=श्र्+ई+शः=श्रीशः; विष्णु+उदयः=विष्णूदयः; होतृ+ऋकारः=होतॄकारः ।

१७. पदके अन्तमें आनेवाले ए और ओ से परे यदि अ कार हो तो पूर्व तथा पर इनके स्थानमें पूर्वरूप एकादेश होता है । उ० हरे+अव=हर्+ए+अव=हरेव, विष्णो+अव=विष्ण्+ओ+अव=विष्णोव । किन्तु ए अथवा ओ में अकारका लोप हुआ यह सूचित करनेके लिये अवग्रह (ऽ) का चिह्न लगाते है ।

१८. दीर्घ ई कार, दीर्घ ऊकार व ए कार जिन द्विवचनान्त रूपोंके अन्तमें आता है उन रूपोंकी प्रगृह्य संज्ञा होती है ।

१९. प्लुत और प्रगृह्य संज्ञक वर्णोंसे परे स्वर आनेपर संधि कार्य नहीं होता है ।

---

# हल्-संधि-प्रकरणम् ।

२०. **स्तोश्चुना श्चुः** । सकारतवर्गयोः शकारचवर्गाभ्यां योगे शकारचवर्गौ स्तः । रामस् + शेते = रामश्शेते, सत् + चित् = सच्चित्, पान्थश्छायायाम्, बध्दश्चोरः ।

२१. **ष्टुना ष्टुः** । स्तोः ष्टुना योगे ष्टुः स्यात्, रामष्षष्ठः रामष्टीकाम्, तट्टीका ।

## हल् (व्यंजन) संधि-प्रकरण ।

२०. स कार और तवर्गका श कार और च वर्गके साथ संबंध आनेपर स कार और त वर्गके स्थानमें क्रमसे श कार और च वर्गके वर्ण आते है । (देखो सूत्र ३२ विसर्गके स्थानमें स् ) ।

२१. स कार और त वर्ग इनका, ष कार और ट वर्ग इनके साथ संबंध आनेपर स कार और त वर्गके स्थानमें क्रमसे ष कार और ट वर्गके वर्ण आते है । उ० रामस्+षष्ठः=रामष्षष्ठः ।

२२. **झलां जशोऽन्ते** । पदान्ते झलां जशः स्युः । वागीशः

२३. **झलां जश् झशि** । झलां स्थाने जश् स्यात् झशि परे ।

२४. **तोर्लि** । तवर्गस्य लकारे परे परसवर्णः। तल्लयः,विद्वाँल्लिखति।

२५. **झरो झरि सवर्णे** । हलः परस्य झरः वा लोपः सवर्णे झरि ।

२६. **खरि च** । खरि झलां चरः स्यु ।

२७. **शश्छोऽटि** । झयः परस्य शस्य छःवा अटि। तच् शिवः। तच्छिवः।

२८. **मोऽनुस्वारः** । मान्तस्य पदस्य अनुस्वारः हलि । हरिं वन्दे ।

२९. **वा पदान्तस्य** । पदान्तस्य अनुस्वारस्य ययि परे परसवर्णः वा स्यात्——त्वं करोषि, त्वङ्करोषि।

३०. **छे च** । ह्रस्वस्य छे तुगागमः । शिवच्छाया ।

३१. **पदान्ताद्वा** । दीर्घात् पदन्तात् छे तुक्-वा । लक्ष्मीछाया, लक्ष्मीच्छाया ।

३१. (अ) **रषाभ्यां नो णः समानपदे** । पूर्ण, जीर्ण, तृष्णा, कृष्णः

३१. (आ) **अट्कुप्वाङ्नुम् व्यवायेऽपि** । अट् कवर्गः, पवर्गः आङ्, नुम् एतैः व्यस्तैः यथा-सम्भवं मिलितैः च व्यवधाने अपि रषाभ्यां परस्य नस्य णः समान-पदे । करेण, विषेण क्रमेण, अर्केण, (परं राक्ष-सेन, कोशेन)

२२. पदके अन्तमें आनेवाले झल् प्रत्याहारके स्थानमें जश् प्रत्याहार आता है। उ० वाक्+ईशः=वागीशः ।

२३. झल् प्रत्याहारके स्थानमें जश् प्रत्याहार आता है, यदि झश् प्रत्याहार परे हो तो ।

२४. त वर्गसे परे लकार हो तो त वर्गके स्थानमें ल् (पर सवर्ण) आता है।

२५. व्यञ्जनों (हल्)से परे आनेवाले झर्, प्रत्याहारका विकल्पसे लोप होता है यदि सवर्ण झर् परे हो तो ।

२६. खर् प्रत्याहार परे रहनेपर झल् के स्थानमें चर् प्रत्याहार आता है।

२७. झय् प्रत्याहारके परे आनेवाले श् के स्थानमें विकल्पसे छ् आता है यदि अट् प्रत्याहार परे हो तो । उ० तत्+शिवः=तच्+शिवः=तच्शिवः अथवा तच्छिवः ।

२८. पदान्तमें आनेवाले म् का अनुस्वार होता है यदि व्यञ्जन परे हो तो ।

२९. पदान्त अनुस्वारके स्थानमें विकल्पसे सवर्ण वर्ण आता है, यदि यय् प्रत्याहार परे हो तो । त्वं करोषि=त्वङ्करोषि ।

३०. ह्रस्व स्वरसे परे यदि छ कार हो तो तुक् आगम होता है । उ० शिव+छाया=शिव+त्+छाया=शिवच्छाया=शिवच्छाया ।

३१. पदके अन्तमें दीर्घ स्वर आनेसे तुक् आगम विकल्पसे होता है । उ० लक्ष्मी+छाया=लक्ष्मी छाया, अथवा लक्ष्मी+त्+छाया=लक्ष्मीच् छाया=लक्ष्मीच्छाया ।

३१. (अ) एक ही पदमें (ऋ) र् अथवा ष् से, न् परे हो तो उस न् के स्थानमें ण् आता है ।

३१. (आ) इसी र् अथवा ष् से परे आनेवाले न् और पूर्वका वर्ण इनके बीचमें यदि अट्, कवर्ग, पवर्ग, आङ् और नुम् इनमेंसे कोई भी वर्ण (एक अथवा अनेक) हो तो भी, न् के स्थानमें ण् होगा (परन्तु इनसे भिन्न कोई भी वर्ण बीचमें आवे तो न् का ण् नहीं होता है) ।

३१ (इ) **पदान्तस्य**। न स्य णः न। रामान् ।

३१. (इ) पदके अन्तमें रहनेवाले न् के स्थानमें ण् नहीं होता है ।

---

# विसर्ग-सन्धि-प्रकरणम् ।

३२. **विसर्जनीयस्य सः । खरि ।** विष्णुस्त्राता

३३. **ससजुषो रुः ।** पदान्तस्य सस्य सजुषश्च रुः स्यात् ।

३४. **अतो रोरप्लुतादप्लुते ।** अप्लुतात् अतः परस्य रोः उः स्यात् अप्लुते अति । शिवोऽर्च्यः ।

३५. **हशि च ।** तथा । शिवो वन्द्यः ।

३६. **रो रि ।** रेफस्य रेफे परे लोपः ।

३७ **ढ्रलोपे पूर्वस्य दीर्घोऽणः ।** ढरेफयोः लोपनिमित्तयोः पूर्वस्य अणः दीर्घः । पुनर् + रमते = पुना रमते, हरिः रम्यः = हरी रम्यः, शंभुः + राजते = शंभू राजते ।

## विसर्ग-सन्धि-प्रकरण ।

३२. स्वर प्रत्याहार परे रहने पर विसर्गका स कार होता है । उ० विष्णुः त्राता=विष्णुस्त्राता ।

३३. पदान्तमें आनेवाले स कार और सजुष् शब्दका षकार इनके स्थानमें रु होता है ।

३४. अप्लुत अ कारसे परे आनेवाले रु के स्थानमें उ होता है यदि अप्लुत अकार परे हो तो । शिवः अर्च्यः=शिवस्+अर्च्यः (३२)=शिवरु+अर्च्यः (३३)=शिव उ अर्च्यः (३४) शिवो अर्च्यः = शिवोऽर्च्यः (१७) ।

३५. हश् प्रत्याहार परे होनेपर रु के स्थानमें उ होता है शिवः वन्द्यः=शिवस् वन्द्यः=शिवरु वन्द्यः=शिव उ वन्द्यः=शिवो वन्द्यः, नमो नृसिंहाय ।

३६. र कारसे परे रकार आनेपर पूर्व र कारका लोप होता है । उ० पुनर् रमते=पुना रमते ।

३७. ढ कार और रेफ (र्) इनका यदि लोप हुआ हो तो इनके पूर्वमें रहनेवाले अ, इ, उ दीर्घ होते है । पुनर् रमते=पुन+रमते=पुना रमते, हरि र् रम्यः=हरी रम्यः, शंभुर् राजते=शंभू राजते ।

# कृदन्त-प्रकरणम् ।

३८. **कृदतिङ** । अत्र धात्वधिकारे तिङ-भिन्नः प्रत्ययः कृत्संज्ञः स्यात् ।

३९. **कर्तरि कृत्** । कृत्प्रत्ययः कर्तरि स्यात् ।

**कृदन्ते कृत्य-प्रकरणम् ।**

४०. **तयोरेव कृत्य-क्त-खलर्थाः** । (भावकर्मणोः एव) ।

४१. **तव्यत्तव्यानीयरः** । धातोः एते प्रत्ययाः स्युः । कर्तव्यम् करणीयम् त्वया

४२. **अचो यत्** । जेयः, नेयः, भव्यः

३८. इस धात्वधिकारमें तिङ प्रत्यय (पुरुषवाचक प्रत्यय–देखो सूत्र ८) को छोड़कर अन्य जो प्रत्यय धातुओंके लिये बताये है उन्हें कृत् प्रत्यय कहते है ।

३९. कर्ता इस अर्थमें कृत् प्रत्यय लगते है ।

४०. कृत्य (विध्यर्थ धातुसाधित), क्त (भूतकाल धातुसाधित) तथा खलर्थ प्रत्यय भाव और कर्मका बोध कराते है । (सूत्र ४१,४८,५३ का विवरण देखिये ) ।

४१. तव्यत्, तव्य, अनीयर् ये प्रत्यय धातुओंको भाव और कर्म इस अर्थमें लगते है । उ० एधितव्यम्, एधनीयम् त्वया !

४२. अजन्त धातुओंको यत् (य) प्रत्यय लगता है ।

---

# कृत्-प्रत्ययाः ।

४३. **ण्वुल्तृचौ** । धातोः एतौ स्तः कर्तरि कृत्इति कर्त्रर्थे । कारकः, कर्ता।

४४. **इगुपधज्ञाप्रीकिरः कः** । एभ्यः कः स्यात् । बुधः, कृशः, ज्ञः प्रियः किरः ।

४५. **कर्मण्यण्** । कर्मणि उपपदे धातोः अण् प्रत्ययः स्यात् । कुम्भं करोति इति कुम्भकारः ।

४६ **क्विप् च** । अयम् अपि दृश्यते । दिनकृत्, पयोमुक्, आपद्, संपद् ।

४७. **सप्तम्यां जनेर्डः** । सरोजम् ।

४३. कर्ता इस अर्थमें धातुओंको ण्वुल् (अक्) और तृच् (तृ) प्रत्यय लगते है । उ० कारकः=कृ+ण्वुल्=कृ+अक्=कारकः, कृ+तृ=कर्ता (कर्तृ) ।

४४. जिन धातुओंके उपान्त्य वर्ण इ, उ, ऋ, लृ है ऐसे धातु और ज्ञा प्री और कृ इन धातुओंको क (अ) प्रत्यय लगता है । उ० बुध्+क=बुध्+अ=बुधः, कृशः, ज्ञः, प्रियः किरः आदि ।

४५. किसी धातुका उपपद कर्म हो तो उस धातुसे परे कर्ता इस अर्थमें अण् प्रत्यय आता है । उ० कुम्भं करोति इति कुम्भकारः (कुम्भ+कृ+अण्) ।

४६. और क्विप् प्रत्यय भी आता है । क्विप् प्रत्ययका कोई भाग शेष रहता नहीं (क्विप्=०) परन्तु ह्रस्व स्वरको तुक् (त्) आगम होता है । उदा. दिनकृत् आदि ।

४७ सप्तम्यन्त उपपद रहनेसे जन् धातुसे परे ड (अ) प्रत्यय आता है । उ० सरसि (सप्तमी) जायते इति सरोजम्+सरोजन+ड=अ=सरोजम् (ड् कारके कारण जन् धातुका अन् लुप्त होता है) ।

**४८. क्तक्तवतू निष्ठा ।** भूतार्थ-वृत्तेः धातोः निष्ठा स्यात् । तत्र तयोः एव इति भावकर्मणोःक्तः । कर्तरि कृत् इति कर्तरि क्तवतुः । उकौ इतौ । स्नातं मया । स्तुतस्त्वया विष्णुः । विश्वं कृतवान् विष्णुः ।

**४९. रदाभ्यां निष्ठातो नः पूर्वस्य च दः ।** रदाभ्यां परस्य निष्ठातस्य नः स्यात् निष्ठापेक्षया पूर्वस्य धातोः दस्य च । भिन्नः । छिन्नः । तीर्णः ।

**५०. भावे घञ् ।** पाठः, लाभः लोभः, क्रोधः, स्नेहः

**५१. एरच् ।** इवर्णान्तात् अच् । चयः, जयः ।

**५२. स्त्रियां क्तिन् ।** स्त्रीलिङ्गे भावे क्तिन् स्यात् । कृतिः, स्तुतिः ।

**५३. ईषद्दुस्सुषु कृच्छ्राकृच्छ्रार्थेषु खल् ।** एषु दुःखसुखार्थेषु उपपदेषु खल् । कृच्छ्रे दुष्करः कटो भवता । अकृच्छ्रे ईषत्करः । सुकरः ।

**५४. समानकर्तृकयोः पूर्वकाले ।** समानकर्तृकयोः धात्वर्थयोः पूर्वकाले विद्यमानात् धातोः क्त्वा स्यात् । स्नात्वा व्रजति ।

**५५. समासे अनञ्-पूर्वे क्त्वो ल्यप् ।**

**५६. ह्रस्वस्य पिति कृति तुक् ।** ह्रस्वान्तात् धातोः पिति कृति तुक् आगमः स्यात् ।

४८. क्त और क्तवतु इनकी निष्ठा संज्ञा होती है । भूतकाल सूचित करनेके लिये निष्ठा प्रत्यय धातुओंसे परे आते है । कर्मणि और भावे प्रयोगमें क्त प्रत्यय आता है । कर्तरि प्रयोगमें क्तवतु (तवत्) प्रत्यय आता है । क्त और क्तवतु इनमेंसे क कार और उ कार इत् संज्ञक है । उदा. स्ना+क्त=स्नातं मया (भावे) । स्तु+क्त=स्तुतस्त्वया विष्णुः (कर्मणि) । कृ+क्तवतु=कृतवान् विष्णुः विश्वम् । (कर्तरि) ।

४९ र कार तथा दकारसे परे आनेवाला जो निष्ठा प्रत्यय उसके त् का न् होता है और पूर्वके द कारका भी न कार होता है । उ० भिद्+तः=भिद्+न=भिन्नः । छिद्+तः=छिद्+नः=छिन्नः । तॄ+तः=तीर्+तः=तीर्+नः=तीर्+णः=तीर्णः (सूत्र ३१ देखो) ।

५०. धातुको भाव अर्थमें घञ् प्रत्यय लगता है । उ० पठ्+घञ्=पठ्+अ=पाठः ।

५१ इकारान्त तथा ई कारान्त धातुओंसे परे अच् (अ) प्रत्यय आता है । चि+अ=चे+अ=चय्+अ=चयः । जि+अच्=जयः नी+अच्=नयः ।

५२. भाव इस अर्थमें धातुओंसे परे क्तिन् (ति) प्रत्यय आता है और रूप स्त्रीलिंगका होता है । कृ+क्तिन्=कृतिः स्तु+क्तिन्=स्तुतिः ।

५३. दुःख और सुख इस अर्थमें ईषद्, दुस्, सु ये उपपद होनेपर धातुओंसे परे खल् प्रत्यय आता है । उ० दुस्+कृ+खल् (अ)=दुष्करम्, दुर्लभम् आदि ।

५४. यदि दो क्रियाओंका कर्ता एक हो तो पूर्वकालिक क्रियाको क्त्वा (त्वा) प्रत्यय लगता है । स्नात्वा (पूर्वकालिक क्रिया) व्रजति, नीत्वा, हृत्वा, त्यक्त्वा, कृत्वा, गच्छति ।

५५. उपसर्गके साथ कृदन्तका समास होता हो तो 'क्त्वा' के स्थानपर 'ल्यप्' प्रत्यय आता है (य अथवा त्य) यदि नञ् (अ, अन्) यह नकारार्थक प्रत्यय पूर्वमें न हो तो ।

५६. ह्रस्व स्वरान्त धातुसे परे प् जिसका इत् है ऐसा कृत् प्रत्यय यदि आवे तो उस धातुको तुक् (त्) आगम होता है । अपहृत्य, विस्मृत्य, विजित्य, उपसृत्य ।

५७. **तुमुन्-ण्वुलौ क्रियायां क्रियार्थायाम्** । भविष्यति अर्थे । कृष्णं द्रष्टुं याति, कृष्णं दर्शकः याति ।

५७. (अ) **ऋहलोर्ण्यत्** । ऋवर्णान्तात् हलन्तात् च धातोः ण्यत् । कार्यम् । हार्यम् । धार्यम् ।

५७. (आ) **ऋदोरप्** । ऋवर्णान्तात् उवर्णान्तात् च अप् । करः, गरः,यवः, लवः,स्तवः पवः ।

५७. (इ) **आतोऽनुपसर्गे कः** । आदन्तात् धातोः अनुपसर्गात् कर्मणि उपपदे कः स्यात् गोदः, धनदः

५७. (ई) **नन्दिग्रहिपचादिभ्यो ल्युणिन्यचः** । नन्द्यादेः ल्युः, ग्रह्यादेः णिनिः, पचादेः अच् स्यात् । नन्दयति इति (पृष्ठ ८ अ. देखिये) । नन्दनः, गृह्णाति इति ग्राही, पचति इति पचः ।

५७. (उ) **सुप्यजातौ णिनिस्ताच्छील्ये** । अजात्यर्थे सुपि धातोः णिनिः ताच्छील्ये द्योत्ये । उष्णभोजी.

५७. (ऊ) **आत्ममाने खश्च** । स्वकर्मके मनने मन्यमानात् सुपि खश् स्यात्, चात् णिनिः । पण्डितम् आत्मानं मन्यते पण्डितंमन्यः । पण्डितमानी ।

५७. (ऋ) **लटः शतृशानचावप्रथमासमानाधिकरणे** । अप्रथमान्तेन समानाधिकरणे लटः एतौ वा स्तः । पचन्तं चैत्रं पश्य ।

५७. क्रियासे परे क्रियाके अर्थमें और भविष्य कालके अर्थमें तुमुन् (तुम्) और ण्वुल् (अक) ये प्रत्यय आते है । उ० कृष्णको देखनेके लिये (दृश्+तुम्=द्रष्टुम्) देखनेवाला (दृश्+अक=दर्शकः) जाता है ।

५७. (अ) जिसके अन्तमें ऋ वर्ण हो अथवा व्यञ्जन हो ऐसे धातुसे परे ण्यत् (य) प्रत्यय आता है ।

५७. (आ) ऋ वर्ण अथवा उवर्ण जिनके अन्तमें है ऐसे धातुओंको अप् (अ) प्रत्यय लगता है ।

५७. (इ) अनुपसर्ग आकारान्त धातुके पूर्वमें कर्म-बोधक उपपद हो तो क (अ) प्रत्यय लगता है ।

५७. (ई) नन्द् गणके धातुओंको ल्यु (अन्), ग्रह् गणके धातुओंको णिनि (इन्), पच् गणके धातुओंको अच् (अ) प्रत्यय लगता है ।

५७. (उ) जाति अर्थ न होते हुए सुबन्त शब्द परे होनेपर धातुसे परे णिनि (इन्) प्रत्यय आता है 'वह करनेका शील (स्वभाव) है' यह अर्थ सूचित करनेके लिये ।

५७. (ऊ) क्रियाका कर्म स्वयं ही है ऐसे माननेके अर्थमें मन् धातुको सुबन्त प्रत्यय यदि लगा हो तो धातुसे परे खश् प्रत्यय आता है ।

५७. (ऋ) प्रथमा विभक्तिके अतिरिक्त अन्य विभक्तिओंमें लट् (वर्तमान काल) अर्थमें शतृ (अत्) और शानच् (आन) ये प्रत्यय विकल्पसे लगते है । (शतृ प्रत्यय परस्मैपदमें और शानच् प्रत्यय आत्मनेपदमें धातुओंको लगते हैं) ।

# कारक-प्रकरणम् ।

५८. **प्रातिपदिकार्थलिङ्ग,परिमाणवचनमात्रे प्रथमा ।** नियतोपस्थितिकः प्रातिपदिकार्थः । मात्रशब्दस्य प्रत्येकं योगः । प्रातिपदिकार्थमात्रे लिङ्गमात्राद्याधिक्ये परिमाणमात्रे संख्यामात्रे च प्रथमा स्यात् । प्रातिपदिकार्थमात्रे । उच्चैः नीचैः कृष्णः श्रीः ज्ञानम् । लिङ्गमात्रे तटः तटी तटम् । परिमाणमात्रे द्रोणो व्रीहिः । वचनं संख्या । एकः द्वौ बहवः ।

५९. **संबोधने च।** प्रथमा स्यात्। हे राम ।

६०. **कर्तुरीप्सिततमं कर्म ।** कर्तुः क्रियया आप्तुम् इष्टतमं कारकं कर्मसंज्ञं स्यात् ।

६१. **कर्मणि द्वितीया ।** अनुक्ते कर्मणि द्वितीया स्यात् । हरिं भजति । अभिहिते तु कर्मादौ प्रथमा । हरिः सेव्यते । लक्ष्म्या सेवितः हरिः ।

६२. **स्वतन्त्रः कर्ता ।** क्रियायां स्वातन्त्र्येण विवक्षितः अर्थः कर्ता स्यात् ।

६३. **साधकतमं करणम् ।** क्रियासिद्धौ प्रकृष्टोपकारकं करणसंज्ञं स्यात् ।

६४. **कर्तृकरणयोस्तृतीया ।** अनभिहिते कर्तरि करणे च तृतीया स्यात् । रामेण बाणेन हतो वाली ।

६५. **कर्मणा यमभिप्रैति स संप्रदानम् ।** दानस्य कर्मणा यम् अभिप्रैति स संप्रदानसंज्ञः स्यात् ।

## कारक-प्रकरण ।

५८. नियमसे उपस्थित होनेवाले अर्थको प्रातिपदिकार्थ कहते है* । 'मात्र' शब्द प्रत्येक पदके साथ उपयुक्त करना चाहिये। प्रातिपदिकार्थ सूचित करना हो (उच्चैः, नीचैः, कृष्णः, श्रीः, ज्ञानम्), लिङ्ग विशेषको सूचित करना हो (तटः, तटी, तटम्), परिमाणका बोध कराना हो (द्रोणो व्रीहिः दोना भरके चावल), तथा संख्या दिखाना हो तो (वचन याने संख्या, एक, दो, बहु), प्रथमा विभक्ति होगी।

५९. तथा संबोधनका बोध कराना हो तो प्रथमा विभक्ति होगी । उ० हे राम ।

६०. कर्ताको क्रियाके द्वारा जिसके प्राप्तिकी अत्यधिक इच्छा होती है उस कारकको कर्म कहते है ।

६१. क्रियाके रूपमें जब कर्म उक्त न हो तब कर्मकी द्वितीया विभक्ति होगी। उ० हरिं भजति । कर्मादि कारक उक्त हो तो उनकी प्रथमा विभक्ति होगी । उ० हरिः सेव्यते । लक्ष्म्या सेवितः हरिः ।

६२. क्रियामें जो स्वतंत्र रूपसे विवक्षित हो उसे कर्ता कहते है। उ० रामः गच्छति ।

६३. कोई भी क्रिया करनेमें (क्रियाकी सिद्धिमें) जो कर्ताका अत्यंत उपकारक (सहायक) होता है उस कारकको करण यह संज्ञा है । उ० रामः बाणेन रावणं हन्ति ।

६४. क्रियाके रूपमें निर्दिष्ट न किये गये कर्ता और करणकी तृतीया विभक्ति होगी ।

६५. दान-रूप कर्मसे जिसकी विवक्षा हो (जो अभिप्रेत हो) उस कारकको संप्रदान कहते है । उ० रामः मित्राय फलानि यच्छति ।

---

* धातु, प्रत्यय, प्रत्ययका अन्त इनको छोड़कर अर्थ-युक्त जो शब्द उसे प्रातिपदिकार्थ कहते है ।

६६ **चतुर्थी संप्रदाने ।** विप्राय गां ददाति ।

६७. **नमः स्वस्तिस्वाहास्वधालंवषड्‌योगाच्च ।** एभिः योगे चतुर्थी । हरये नमः । प्रजाभ्यः स्वस्ति । अग्नये स्वाहा । पितृभ्यः स्वधा । अलमइति पर्याप्त्यर्थग्रहणम् । तेन दैत्येभ्यः हरिः अलं प्रभुः समर्थः शक्तः इत्यादि ।

६८. **ध्रुवमपायेऽपादानम् ।** अपायः विश्लेषः तस्मिन् साध्ये यत् ध्रुवम् अवधिभूतं कारकं तत् अपादानं स्यात् ।

६९. **अपादाने पंचमी ।** ग्रामात् आयाति । धावतः अश्वात् पतति ।

७०. **षष्ठी शेषे ।** कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः सम्बन्धः शेषः तत्र षष्ठी । राज्ञः पुरुषः ।

७१. **आधारोऽधिकरणम् ।** कर्तृकर्मद्वारा तन्निष्ठक्रियायाः आधारः कारकम् अधिकरणं स्यात् ।

७२. **सप्तम्यधिकरणे ।** अधिकरणे सप्तमी स्यात् । कटे आस्ते । स्थाल्यां पचति । मोक्षे इच्छा अस्ति ।

६६. संप्रदानके अर्थमें चतुर्थीका प्रयोग करते है । उ० विप्रको गाय देता है ।

६७. नमः, स्वस्ति, स्वाहा, स्वधा, अलम्, वषट् इन अव्ययोंका क्रियाके साथ योग (संबंध) होनेसे चतुर्थीका प्रयोग करते है । हरिको प्रणाम, प्रजाका कल्याण, अग्निको आहुति, पितरोंको आहुति । अलम्‌का उपयोग पर्याप्त इस अर्थमें हो, तो चतुर्थीका प्रयोग करते है । दैत्योंके लिये हरि पर्याप्त (=समर्थ) है ।

६८. दो वस्तुओंका वियोग होनेपर जिससे दूसरी वस्तु अलग होती है उसे अपादान कहते है ।

६९. अपादानके अर्थमें पंचमी विभक्तिका प्रयोग करते है । उ० ग्रामसे आता है । दौडनेवाले घोडेसे गिरता है ।

७०. सूत्र ५८ से ६९ तकके सूत्रोंमें कहे हुए कारक याने क्रियाके साथ आये हुए संबंध और प्रातिपदिकार्थ इनसे अतिरिक्त क्रियाके साथ जो संबंध शेष रहता है (स्वयंका अथवा स्वामित्वका संबंध) वह सूचित करनेके लिये षष्ठी विभक्तिका प्रयोग करते हैं । उ० राजाका सेवक ।

७१. कर्ता और कर्मके द्वारा परम्परासे (अप्रत्यक्ष रूपसे) जो क्रियाका आधारभूत (काल अथवा स्थान) होता है उस कारकको अधिकरण कहते है ।

७२. अधिकरण कारककी सप्तमी विभक्ति होगी । उ० चटाईपर बैठता है । थालीमें पकाता है । मोक्षकी इच्छा करता है ।

# तद्धित-प्रकरणम् ।

७३. **तस्यापत्यम्** । षष्ठयन्तात् कृतसंधेः समर्थात् अपत्ये अर्थे उक्ताः वक्ष्यमाणाः च प्रत्ययाः स्युः ।

७४. **शिवादिभ्योऽण्** । अपत्ये । शैवः, गाङ्गः ।

७५. **स्त्रीभ्यो ढक्** । स्त्रीप्रत्ययान्तेभ्यः ढक् । वैनतेयः ।

७६. **तस्य समूहः** । काकानां समूहः काकम् ।

७७. **ग्रामजनबन्धुभ्यस्तल्** । ग्रामता, जनता; बन्धुता ।

७८. **तस्य निवासः** । शिबीनां निवासो देशः शैबः ।

७९. **नद्यादिभ्यो ढक्** । नादेयम्, माहेयम्, वाराणसेयम् ।

८०. **कालाट्ठञ्** । कालवाचिभ्यःठञ् । कालिकम्,मासिकम्,सांवत्सरिकम् ।

८१. **तेन प्रोक्तम्** । पाणिनिना प्रोक्तं पाणिनीयम् ।

८२. **तस्य विकारः** । अश्मनो विकारः आश्मः । भास्मनः । मार्तिकः ।

८३. **शिल्पम्** । मृदङ्गवादनं शिल्पम् अस्य, मार्दङ्गिकः ।

८४. **सभाया यः** । सभ्यः (=सभा+यः)

८५. **शरीरावयवाद् यत्** । दन्त्यम्, कण्ठ्यम् नस्यम् ।

७३. यदि षष्ठयन्त सन्धि हो और तद्धित प्रत्ययके साथ सहयोग हो तो उस शब्दसे परे अपत्य इस अर्थमें कहे हुए और कहे जानेवाले प्रत्यय आते है । अण् (अ) आदि ।

७४. अपत्य अर्थमें शिव आदि गणसे परे अण् (अ) प्रत्यय आता है । उ० शिव+अण्=शैवः, गाङ्गः ।

७५. स्त्री प्रत्ययान्त शब्दोंसे परे अपत्य अर्थमें ढक् (एय) प्रत्यय आता है । उ० विनता+ढक्=वैनतेयः (विनताका पुत्र), गाङ्गेयः ।

७६. समूह अर्थमें अण् प्रत्यय । कौओंका समूह काक+अण्=काकम् ।

७७. ग्राम, बन्धु, जन, इनसे परे समूह अर्थमें तल् (ता) प्रत्यय आता है । ग्रामता=ग्रामोंका समूह, जनता=जनसमूह बन्धुता=बन्धुसमूह ।

७८. उनका रहनेका देश इस अर्थमें शब्दोंको अण् (अ) प्रत्यय लगता है । शिबीओंका देश शैबः ।

७९. नदी आदि गणके शब्दोंको ढक् (एय) प्रत्यय लगता है । नदी+ढक् (एय)=नादेयम् ।

८०. कालवाचक शब्दोंसे परे ठञ् (इक) कालः+ठञ् (इक)=कालिकम् ।

८१. उसने कहा इस अर्थमें ईय प्रत्यय आता है । पाणिनीने कहा । पाणिनीयम्

८२. उसका विकार इस अर्थमें अण् अश्मन्+अण्=आश्मः ।

८३. कुशलताके अर्थमें ठञ् प्रत्यय लगता है । मृदङ्ग+ठञ्=मार्दङ्गिकः ।

८४. सभामें अच्छा इस अर्थमें य प्रत्यय लगता है । सभा+य=सभ्यः ।

८५. शरीरके अवयवोंसे उत्पन्न इस अर्थमें यत् (य) दन्त+यत्=दन्त्यः ।

८६. **तेन क्रीतम्**। सप्तत्या क्रीतं साप्ततिकम् ।

८७. **तदस्य संजातं तारकादिभ्य इतच्**। तारकाः सञ्जाता अस्य तारकितं नभः ।

८८ **पञ्चम्यास्तसिल्**। पञ्चम्यन्तेभ्यः किमादिभ्यः तसिल् वा स्यात्। किम्+तस्कुतः । कस्मात् ।

८९. **कृभ्वस्तियोगे संपद्यकर्तरि च्विः**। (अभूततद्भावे इति वक्तव्यम्) विकारात्मतां प्राप्नुवत्यां प्रकृतौ वर्तमानात् विकारशब्दात् स्वार्थे च्विः वा स्यात् करोत्यादिभिः योगे ।

९०. **तदस्यास्त्यस्मिन्निति मतुप्**। गावो अस्य अस्मिन् वा सन्ति। गोमान्।

९१. **मादुपधायाश्च मतोर्वोऽयवादिभ्यः**। मवर्णावर्णान्तात् मवर्णावर्णोपधात् च यवादि-वर्जितात् परस्य मतोः मस्य वः। वेतस्वान्, धनवान्, पुण्यवान्, लक्ष्मीवान्।

९२. **दण्डादिभ्यो यत्**। एभ्यःयत् स्यात्। दण्डम् अर्हति दण्डयः। अर्घ्यः। वध्यः।

९३. **अल्पे (कन्)**। तैलकम् (अल्पं तैलम्)।

९४. **इवे प्रतिकृतौ**। कन् स्यात्। अश्वः इव प्रतिकृतिः अश्वकः।

८६. इतने (मूलयसे) से खरीदा इस अर्थमें ठञ् (इक) सप्तति+ठञ्=साप्ततिकम्।

८७. तारकादि गणके शब्दोंसे परे वे उत्पन्न हुए जिनमें इस अर्थमें इतच् (इत) प्रत्यय आता है। तारका+इतच्=तारकितम् ।

८८. पंचम्यन्त किम् आदिको तसिल् (तः) प्रत्यय विकल्पसे लगता है। किम्+तस्=कुतः। कस्मात् (कहांसे, क्यों)।

८९. कृ, भू-करना, होना इनसे संबंध (योग) होनेपर एकादी प्रकृति (मूल शब्द) विकारको प्राप्त हो तो विकार वाचक शब्दसे परे च्वि (ई) प्रत्यय आता है। (जो नहीं था वह हुआ इस अर्थमें) शुक्लीकरोति, घनीभवति ।

९०. वह (वस्तु) उनकी है अथवा उनमें है इस अर्थमें मतुप् (मत्) प्रत्यय आता है। गौएं जिसकी है वह गो+मतुप्=गोमान् ।

९१. मवर्ण अथवा अवर्ण अन्तमें अथवा उपान्तमें होनेसे यवादिके अतिरिक्त अन्य किसी भी वर्णसे परे मतुप् प्रत्यय होनेपर उसके मके स्थानमें व आता है।

९२. दण्डादि गणके शब्दोंको यत् (य) प्रत्यय योग्य इस अर्थमें लगता है।

९३. अल्पे (कन्) अल्प इस अर्थमें कन् (क) प्रत्यय लगता है। तैल+कन्=तैलकम् (अल्पं तैलम्)।

९४. प्रतिकृति (मूर्ति) इस अर्थका बोध करानेके लिये क प्रत्यय लगता है। (इव उसके जैसा इस अर्थमें) अश्व+क=अश्वकः। अश्वके जैसी प्रतिकृति ।

# स्त्री-प्रत्ययाः ।

९५. **अजाद्यतष्टाप्** । अजादीनाम् अकारान्तस्य च वाच्यं-यत् स्त्रीत्वे तत्र द्योत्ये टाप् स्यात् । अजा, एडका, अश्वा, चटका, मूषिका, बाला, वत्सा ।

९६. **उगितश्च** । उगिदन्तात् प्रातिपदिकात् स्त्रियां ङीप् स्यात् । भवती । भवन्ती । पचन्ती ।

९७. **ऋन्नेभ्यो ङीप्** । ऋदन्तेभ्यः नान्तेभ्यः च स्त्रियां ङीप् । क्रोष्टृ-क्रोष्ट्री, दातृ-दात्री, करिन्-करिणी मानिन् मानिनी ।

### स्त्री-प्रत्यय ।

९५. अज, एडक आदि शब्दोंको स्त्रीलिंगमें टाप् (आ) प्रत्यय लगता है ।

९६. इ, उ, ऋ, लृ (ह्रस्व अथवा दीर्घ) इनमेंसे कोई भी वर्ण जिस प्रत्ययमें इत् हो वह प्रत्यय पदके अन्तमें होनेपर ङीप् (ई) यह स्त्रीलिङ्गका प्रत्यय लगता है ।

९७. ह्रस्व ऋ-कारान्त और नकारान्त शब्दोंको स्त्रीलिंगमें ङीप् (ई) प्रत्यय लगता है । उ० क्रोष्टृ+ङीप्=क्रोष्ट्री आदि ।

---

# अथ उणादयः ।

९८. **उणादयो बहुलम्** । कारुः, वायुः, स्वादुः, साधुः । एते वर्तमाने संज्ञायां च बहुलं स्युः ।

केचिद्-विहिताः अपि ऊह्याः ।
संज्ञासु धातुरूपाणि प्रत्ययाश्च ततःपरे ।
कार्याद्विद्यादनूबन्धमेतच्छास्त्रमुणादिषु॥

### उणादि ।

९८. ये प्रत्यय वर्तमान कालमें तथा संज्ञामें (संज्ञा दर्शक होनेपर) विभिन्न अर्थमें लगते है । कथित न होनेपर भी कुछ प्रत्यय अनुमानसे समझ लेना चाहिये । सज्ञाओंमें धातुओंके रूप उनसे परे आनेवाले प्रत्यय और प्रत्ययोंके कार्य इनसे उनके अनुबंधका अनुमान करना होगा । यह उणादि प्रत्यय जाननेका शास्त्र है ।

प्रणम्य शिरसा देवीं रेणुकां जगदम्बिकाम् ।
बालानां सुखबोधाय कौमुद्यनूदिता मया ॥
सङ्कलनञ्च सूत्राणां कृतं बालोपयोगिनाम् ।
अनूदितं गणेशेन सोदाहरणमेव च ॥

---

संस्कृत-भाषा-प्रचारि-सभायाः

# मौखिक-संस्कृत-परीक्षाणां कृते

द्वादश-पुष्पात्मिकी संस्कृत-भाषा-प्रचार-वाङ्मयमाला ।

मूल्यम् आणकद्वयं प्रतिपुस्तकम् । एकादश-द्वादश-पुष्पयोः स्थूल-मल-पृष्ठात्मकं संस्करणम् अपि विद्यते, यस्य मूल्यं प्रतिपुस्तकम् आणक-चतुष्कम् ।

| पुष्पम् पुस्तक-नाम | कर्ता |
|---|---|
| **प्रथम-परीक्षा-** | **प्रथम-परीक्षा-** |
| १. बालामृत-शतश्लोकी | स. ना. कुलकर्णी B. A., L. T. |
| २. सुलभ-शब्द-रूपावलिः | स. ना. कुलकर्णी B. A. L. T. |
| ३. व्यवहार-प्रश्नोत्तरी | स. ना. कुलकर्णी B. A. L. T. |
| **द्वितीय-परीक्षा-** | **द्वितीय परीक्षा-** |
| ४. उपयुक्त-धातुरूपावलिः | स. ना. कुलकर्णी B. A., L. T. |
| ५. हितोपदेश-कथाः | ह. य. तेलंग B. A. (Hons.), B. T. |
| ६. संक्षिप्तामरकोशः | स. ना. कुलकर्णी B. A., L. T |
| **तृतीय-परीक्षा-** | **तृतीय-परीक्षा-** |
| ७. छात्रामृत-शतश्लोकी | स. ना. कुलकर्णी B. A., L. T. |
| ८ रामायण-कथा | प्रा. दि. वि. वराडपाण्डे M. A. |
| ९. व्यवहार-सूक्तावलिः | स. ना. कुलकर्णी B. A, L. T. |
| **संस्कृत-प्रवेश-परीक्षा-** | **संस्कृत-प्रवेश-परीक्षा-** |
| १०. महाभारत-कथाः | प्रा.श्री. भा. वर्णेकर M. A., काव्यतीर्थः |
| ११. नाट्य-प्रवेशः | प्रा श्री. भा. वर्णेकर M. A., काव्यतीर्थः |
| १२. कौमुदी-प्रवेशः | प्रा. ल. रा. कुलकर्णी M. A., L. T. |
| १२. कौमुदी-प्रवेशः अनुवादकः | ग. श्री. वारे शास्त्री M. A. वेदान्ततीर्थः |

कुलकर्णी-भवनम्
धर्मपीठम्, नागपुरम्

स. ना. कुलकर्णी
प्रमुख-कार्यवाहः
संस्कृत-भाषा-प्रचारिणी सभा, नागपुरम् ।




इयं पुस्तिका वर्धानगरस्थ-राष्ट्रभाषा-प्रचार-समितेः मुद्रणालये मुद्रिता नागपुरस्थ-संस्कृत-भाषा-प्रचारि-सभा-द्वारा प्रमुख-कार्यवाहेन धर्मपीठे कुलकर्णी-भवने प्रकाशतां च नीता ।

